# सनातन
# षोडश संस्कार विधिः

(शुक्ल यजुर्वेदीय वाजसनेयी शाखायाः
पारस्कर गृह्यसूत्रानुसारी)

व्याख्याता
कर्मकाण्डभास्कर पण्डित भीमसेन शर्मा

सम्पादकः—संशोधकश्च
कृष्णानन्द शास्त्री

प्रकाशक
भारतीय संस्कृत भवन
माई हीरां गेट, जालन्धर शहर 144008

# सनातन षोडश संस्कार विधिः

## विषयानुक्रमणिका

# नवग्रह मण्डलम्

पश्चिम

❀ श्रीगणेशाय नमः ❀

# अथ कात्यायनी शान्तिः

ओं स्वस्ति श्री गणेशाय नमः । अथ कात्ययानी शान्तिः प्रयोगः ।
आदौ गणपतिं वन्दे विघ्ननाशं विनायकम् ।
ऋषींश्च देवजननीं ग्रहस्थापनमारभे ॥ १ ॥
मण्डलं च ततः कृत्वा सर्वतोभद्रमेव च ।
व्रतोपनयने चूडायां च शान्ति रुदाहृता ॥ २ ॥
विवाहादौ लिखेन्नित्यं तिलकं नाम मण्डलम् ।
द्वादशाङ्गुल मध्यस्थे वर्तुलाष्टदलं रविम् ॥ ३ ॥
चतुर्विंशतिराग्नेय्यां चन्द्रमर्धं लिखेत्तथा ।
त्रिकूटं भूसुतं चैव दक्षिणे चतुरंगुलम् ॥ ४ ॥
धनुराकारं नवांगुल्यमीशाने बुधं तथा ।
उत्तरे च गुरुः स्थाप्यः पद्माकरो नवांगुलः ॥ ५ ॥
पूर्वे संस्थापयेच्छुक्रं चतुष्कोणं नवांगुलम् ।
खड्गाकृति नवांगुल्यं प्रतीच्यां शनिमेव च ॥ ६ ॥
राहुं संस्थाप्य नैर्ऋत्यां मत्स्याकारं नवांगुलम् ।
केतुं दीर्घं यथाराहुं वायव्यां दिशि संस्थितम् ॥ ७ ॥
स्व स्व दिक्षु ग्रहाः स्थाप्याः संख्या रेखा भवेद्ध्रुवम् ।
भास्करांगारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ॥ ८ ॥
सोम पुत्रो गुरुश्चैव उभौ तौ पीतकौ स्मृतौ ।
कृष्णवर्णोभवेत्सौरी राहु केतू च धूम्रकौ ॥ ९ ॥
ब्रह्माविष्णु रुद्रश्च उत्तरे च तथाऽनलः ।
इन्द्रोवायुर्भवेत् पूर्वे सर्पकालौ च दक्षिणे ॥ १० ॥
ऐशान्यांकलशं स्थाप्य ओंकारादींश्च सर्वतः ।
मात्तरश्चोत्तरे स्थाप्या आग्नेय्यां योगिनीं न्यसेत ॥ ११ ॥

कनिष्ठिका प्रमाणेन रेखा सदा कार्य्याः प्रयत्नतः ।
स्थूला सूक्ष्मा न कर्त्तव्या यदीच्छेच्छ्रेयमात्मनः ॥ १२ ॥
इतिग्रहस्थापनम् ॥

स्नान करके शुद्ध वस्त्र धारण करके पवित्र आसन पर पूर्वाभिमुख वैठकर

ओं अपवित्रः पवित्रोऽपि सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरो शुचि ॥

इससे सिञ्चिन कर—ओं ऋग्वेदाय नमः, ओं यजुर्वेदाय नमः, ओं सामवेदाय नमः ।

से तीन वार आचमन करके पृथ्वी पूजन करे ।

ओं पृथ्वी त्वया धृताः लोकाः देवि त्वं च विष्णुना ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

# अथ स्वस्तिवाचनम्

चावल पुष्प लेकर स्वस्तिवाचन करें ।

ॐ स्वस्तिनः इन्द्रो वृद्धश्रवा स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्तिनो वृहस्पतिर्दधातु ॥ यजुः ॥ 25/19 ॥

ॐ पयः पृथिव्याम्पयः ओषधीषु पयोदिव्यन्तरिक्षे पयोधाः । पयस्वतीप्प्रदिशः सन्तुमह्यम् ॥ यजुः अ. 18/36

ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो । विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवेत्त्वा ॥ 5/21 ॥

ॐ अग्निर्देवतावातो देवता सूर्यो देवता चन्द्रमा देवता

वसवो देवता रुद्रादेवताऽऽदित्या देवता मरुतो देवता। विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणोदेवता ॥ 14/20 ॥

ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरौषधयः शान्तिर्वनस्पतयः शान्ति विश्वेदेवाः शान्तिः ब्रह्मशान्तिः सर्वꣳ शान्तिः। शान्तिरेव शान्ति सामा शान्तिरेधि ॥ सुशान्तिर्भवति ॥ 36/17 ॥

ॐ विश्वानिदेव सवितर्दुरितानि परासुव।
यद् भद्रं तन्नः आसुव ॥ 30/3 ॥

ॐ इमा रुद्रायतंवसे कपर्दिनेक्षयद्वीराय प्रभरामहेमतीः।
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ अ० 16/48 ॥

ॐ एतन्ते देव सवितर्यज्ञम्प्राहु र्बृहस्पतये ब्रह्मणे।
तेन यज्ञमवतेनयज्ञपतिं तेन मामव ॥ अ 2/12 ॥

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पति र्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवा स इह मादयन्ता मो ३ प्रतिष्ठ ॥ 2।13 एष वै प्रतिष्ठ नामयज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ॥

ॐ गणानांत्वागणपति ꣳ हवामहेप्रियाणांत्वा
प्रियपतिꣳ हवामहे निधीनांत्वानिधिपतिꣳ हवामहे
व्वसोमम। आहमजानिगर्भधमात्वमजासिगर्भधम् ॥23/19

---

यह मन्त्र ब्राह्मण ग्रन्थ का है।

ॐ नमो गणेभ्यो गणपतिभ्यश्चवो नमो
नमो व्रातेभ्योव्रातपतिभ्यश्चवो नमो
नमो गृत्सेभ्योगृत्सपतिभ्यश्चवो नमो
नमो विरूपेभ्योविश्वरूपेभ्यश्चवो नमः ।। 16/25

ओं शान्तिः सर्वारिष्ट शान्तिर्भवतु इति स्वस्ति वाचनम् ।

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ।। धूम्रकेतु-र्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।। विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ।।

स्वस्ति वाचन के अन्तर प्रतिज्ञा संकल्प करे--ततः सङ्कल्पः—

ओं तत्सदद्यब्रह्मणो द्वितीय प्रहरार्धे श्रीश्वेत वाराह कल्पे जम्बूद्वीपे भरतखण्ड आर्यावर्ते वर्तमान-कलियुगे प्रथमचरणे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगेअमुकऋतौअमुकमासेअमुकपक्षे अमुक वासरे अमुक-तिथौ अमुक नक्षत्रे अमुकयोगे अमुकरणयुक्ते श्रुति स्मृति पुराणोक्त फलावाप्तिकामः धर्मार्थं काममोक्षार्थे मनोऽभि-लषित प्राप्तये अमुक गोत्रो अमुक शर्मा (वर्मा) अहं अमुक कर्म निमित्तकं कात्यायनीयशान्तिं करिष्ये ।

ओं भू र्भुवः स्वः गणपतिदेव इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदो भव मम पूजां गृहाण पाद्यादिभिरर्चयेत्

भगवन् गणपतिदेव एतत्पाद्यादिभिर्गन्धाक्षतादिभिश्च पूजितः प्रसन्नो भव ।

ॐ वक्र तुण्ड महाकाय सूर्य कोटि समप्रभ ।

अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

ॐकारपूजनम्—आवाह्याम्यहं देवमोंकारं परमेश्वरम् । त्रिमात्रं त्र्यक्षरं दिव्यं त्रिपदं च त्रिदैवकम् ॥ त्र्यक्षरं त्रिगु-णाकारं सर्वाक्षरमयं शुभम् । त्र्यणवं प्रणवं हंसं स्रष्टारं परमेश्वरम् ॥ अनादिनिधनं देवमप्रमेयं सनातनम् । परात्परतरं बीजं निर्मलं निष्कलं शुभम् ॥

ओं भूर्भुवः स्वः ओंकार देव इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदो अव । मम पूजां गृहाण ओंकाराय नमः इत्यावाह्य—

ओंकारं विन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।

कामदं मोक्षदं चैव श्री ओंकाराय । नमः ॥ इतिनम-स्कुर्यात् ।

रक्षाबन्धनम्—ॐ मानः शं सो अररुषोधूर्तिऽप्रणङ्-मर्त्यस्य रक्षाणो ब्रह्मणस्पते । यजु० अ० 3/30 ॥

ॐ यदा बध्नन्दाक्षायणा हिरण्य छ शतानीकाय सुम-नस्यमानाः । तन्म आवध्नामि शंतशारदायाऽऽयुष्मान्जर-दष्टिर्यथासम् । यजु० 34/52 ॥

इस मन्त्र से रक्षाबन्धन करें ।

षोडश मातृका पूजनम्—

ॐ गौरी पद्माशचीमेधा सावित्री विजया जया ।

देवसेना स्वधा स्वाहा मातरो लोक मातरः ॥

हृष्टिः पुष्टिस्तथा तुष्टिस्तथात्मकुलदेवता ।

श्री कुल देव्यन्तर्गतागौर्यादि षोडश मातृभ्यो नमः ॥

गौर्यादिषोडशमातृभ्यो नमः ।

ऋत्विजां वरणम्—यथा चतुर्मुखो ब्रह्मा सर्वदेवधरः प्रभुः

तथा त्वं ममयज्ञोऽस्मिन् ब्रह्माभव द्विजोत्तम ॥

गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदम् ।

अस्य कर्मणः प्रतिष्ठापनार्थं त्वं ब्रह्मा भव ।

'अहं भवामि' इति ब्रह्मा ब्रूयात् ।

आचार्यस्तु यथा स्वर्गे शक्रादीनां वृहस्पतिः ।

तथा त्वं मम यज्ञेऽस्मिन्नाचार्योभव सुव्रत ॥

गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदम् ।

अस्य कर्मणः प्रतिष्ठापनार्थं त्वमाचार्यो भव ॥

अहं भवामि इति ब्राह्मणो ब्रूयात् ।

कातराक्षो यजुर्वेदस्त्रिष्टुभो ब्रह्मदेवतः ।

भारद्वाजस्तुविप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥

गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदम् ।

अहं भवामि, इति ब्राह्मणो ब्रूयात्

अस्यकर्मणः प्रतिष्ठापनार्थं त्वंमे यजुर्वेदी भव

अहं भवामि इति ब्राह्मणो ब्रूयात् ।

सामवेदस्तु पिंगलाक्षस्त्रिष्टुभोविष्णुदैवतः ।

काश्यपेयस्तु विप्रेन्द्र होता त्वं मे मखे भव ॥

गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदम् ।

अस्यकर्मणः प्रतिष्ठापनार्थं त्वं मे सामवेदी भव।
'अहं भवामि' इति ब्राह्मणो ब्रूयात्।

अथाशीर्वादः—ऋग्वेदोऽथयजुर्वेदः सामवेदोह्यथर्वणः।
ब्रह्मवाक्यैर्नित्यं हन्यतां तव शत्रवः॥
अपुत्राः पुत्रिणः सन्तु, पुत्रिणः सन्तु पौत्रिणः।
अधनाः सधनाः सन्तु, सन्तु सर्वार्थं साधकाः॥
विप्रहस्ताच्च गृह्णीयात् यज्ञपुष्पफलाक्षतान्।
चत्वारस्तव वर्धन्तामायुः विद्या यशोबलम्॥

अथ कलश पूजनम्—ॐ ऋग्वेदाय नमः, यजुर्वेदाय नमः, सामवेदाय नमः अथर्वणवेदाय नमः, वरुणाय नमः, रुद्राय नमः, समुद्राय नमः, गंगायै नमः, यमुनायै नमः, सरस्वत्यै नमः, कुम्भाय नमः॥

ब्रह्मणानिर्मितस्त्वं हि मन्त्रैरेवामृतोद्भवैः।
प्रार्थयामि च कुम्भस्त्वां वांच्छितार्थं तु देहि मे॥

ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्त्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद॥ अ० 4/36॥

इति कलशे वरुणं पूजयेत।

अथ वास्तु पूजनम्—

अथातः संप्रवक्ष्यामि यदुक्तं वास्तुपूजनम्।
येन पूजा विधानेन कर्म सिद्धिस्तु जायते॥
अनन्तं पुण्डरीकाक्षं फणाशतविभूषितम्।

विद्युद्वन्धूकसाकारं कूर्मारूढं प्रपूजयेत् ॥
ॐ नमोऽस्तु सर्पेभ्यो ये च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्योसर्पेभ्यो नमः ॥
वासुक्याद्यष्टकुलनागेभ्यो नमः ।
योगिनी पूजा—
ॐ आवाह्याम्यहं देवीं योगिनीं परमेश्वरीम् ।
योगाभ्यासेन सन्तुष्टा परध्यान समन्विता ॥ 1 ॥
दिव्य कुण्डल संकाशा दिव्य ज्वाला त्रिलोचना ।
मूर्तिमती ह्यमूर्त्ता च उग्रा चैवोग्ररूपिणी ॥ 2 ॥
अनेकभावसंयुक्ता संसारार्णवतारिणी ।
यज्ञं कुर्वन्तु निर्विघ्नं श्रेयो यच्छन्तु मातरः ॥ 3 ॥
दिव्ययोगी महायोगी सिद्ध योगी गणेश्वरी ।
प्रेताशी डाकिनी काली कालरात्रि निशाचरी ॥ 4 ॥
हुंकारी सिद्धवेताली खर्परी भूतगामिनी ।
उर्ध्वकेशी विरूपाक्षी शुष्कांगी मांसभोजनी ॥ 5 ॥
फूत्कारी वीरभद्राक्षी धूम्राक्षी कलहप्रिया ।
रक्ता च घोररक्ताक्षी विरूपाक्षी भयंकरी ॥ 6 ॥
रौरिका मारिका चण्डी वाराही मुण्डधारिणी ।
भैरवी चक्रिणी क्रोधा दुर्मुखी प्रेतवासिनी ॥ 7 ॥
कालाक्षी मोहिनी चक्री कंकाली भुवनेश्वरी ।
कुण्डला तालकौमारी यमदूती करालिनी ॥ 8 ॥

कौशिकी यक्षिणी यक्षी कौमारी यन्त्र वाहिनी ।
दुर्घंटे विकटे घोरे कपाले विषलंघने ॥ 9 ॥
चतुःषष्टि समाख्याता योगिन्यो हि वरप्रदाः ।
त्रैलोक्ये पूजिता नित्यं देवमानुष योगिभिः ॥ 10 ॥
श्री चतुः षष्टियोगिनीभ्यो नमः ।

## नवग्रह पूजनम्

सूर्यं पूजनम्—

ॐ आकृष्णेन रजसा वर्तमानोनिवेशयन्नमृतंमर्त्यंञ्च हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ।
॥ 34/31 ॥

इत्यावाह्यपूजयेत्, सूर्याय नमः ।

प्रार्थना—जपाकुसुमसंकाशं काश्यपेय महाद्युतिम् ।
तमोऽरिं सर्वपाघ्नं प्रणतोऽस्मि दिवाकरम् ॥

चन्द्र पूजनम्—

ॐ इमन्देवा असपत्नः ७ सुवध्वंमहतेक्षत्राय महते ज्येष्ठ्याय महते ज्यानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रमुष्यै विश एष वोमि राजा सोमोऽस्माकं ब्राह्मणानां ७ राजा ।
॥ यजुः अ० 10/18 ॥

इत्यावाह्य पूजयेत् । चन्द्रमसे नमः ।

प्रार्थना—दधिशंखतुषाराभंक्षीरोदार्णव सम्भवम् ।
नमामि शशिनं सोमं शम्भोर्मुकुट भूषणम् ॥

भौम पूजनम्—

ॐ अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्या अयम्/अपा७

रेतांꣳ सिजिन्वति ।। यजुः, अ० 3/12 ।।

इत्यावाह्य पूजयेत। भौमाय नमः ।

प्रार्थना—धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम् ।
कुमारं शक्ति हस्तं च तं मंगलं प्रणमाम्यहम् ।।

बुध पूजनम्—

ॐ उदबुध्यस्वाग्ने प्रतिजागृहित्वमिष्टा पूर्ते सꣳ सृजे-थामयञ्च। अस्मिन्सधस्थेऽध्युत्तरस्मिन् विश्वेदेवा यजमान-श्च सीदत ।। यजु० अ० 15/54 ।।

इत्यावाह्य पूजयेत। बुधाय नमः ।

प्रार्थना—प्रियङ्गकुलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ।।

गुरु पूजनम्—

ओं वृहस्पते अतियदर्योंअर्हाद् द्यु मद्विभातिक्रतुमज्जनेषु। यद्दीदयच्छवस ऋत प्रजातत्तदस्मासु द्रविणन्धेहिचित्रम् ।। 26/3 ।।

इत्यावाह्य पूजयेत। वृहस्पतये नमः

प्रार्थना—देवानां च ऋषीणां च गुरुं कांचनसन्निभम् ।
वुद्धिभूतं त्रिलोकेशं तं नमामि वृहस्पतिम् ।।

शुक्र पूजनम् -

ओं अन्नात्परिस्नुतोरसम्ब्रह्मणाव्यपिवत्क्षत्रम्पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धसइन्द्रस्ये न्द्रियमिदम्पयोऽमृतम्मधु ।। 19/75 ।।

इत्यावाह्य पूजयेत। शुक्रायनमः ।

प्रार्थना—हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ।।

शनि पूजनम्—

ओं शन्नोदेवीरभिष्टय आपो भवन्तु पीतये ।
शंय्योरभिस्रवन्तु नः ॥ यजु. अ. 36/12 ॥

इत्यावाह्य पूजयेत । शनैश्चराय नमः ।

प्रार्थना—

नीलाञ्जन समाभासं रविपुत्रं यमाग्रजम् ।
छाया मार्तण्डसमाभासं तं नमामि शनैश्चरम् ॥

राहुपूजनम्—

ओं कयानश्चित्र आभुवदूती सदा वृधः सखा ।
कयाशचिष्ठयावृता ॥ राहवे नमः यजु० अ० 27/39

प्रार्थना—

अर्धकायं महावीर्यं चन्द्रादित्य विमर्दनम् ।
सिंहिकागर्भ सम्भूतं तं राहुं प्रणमाम्यहम् ॥

केतुपूजनम्—

ओं केतुं कृण्वन्न केतवे पेशोमर्याऽपेशसे । समुषद्भिरजा यथा । केतवे नमः ॥ यजु० अ० 29/37

प्रार्थना—

पलाश पुष्प संकाशं तारकाग्रह मस्तकम् ।
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥

अथाधिदेवतानामावाहनम् :—(पुष्पाक्षतैः)

1. अक्षत पुंजे सूर्य दक्षिण पार्श्वे—

ओं भूर्भुवः ईश्वर इहागच्छ इह तिष्ठ वरदो भव मम पूजां गृहाण । इत्यावाह्य—

ओं त्र्यम्वकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ।
ईश्वराय नमः ।

2. सोमस्य दक्षिणे पार्श्वे—ओं भूर्भुवः स्वः उमे इहागच्छ इहतिष्ठ इत्यावाह्य—

ओं श्रीश्च ते लक्ष्मीश्च पत्न्यावहो रात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्म इषाण सर्वलोकं म इषाण ॥ उमायै नमः ।

3. भौम दक्षिण पार्श्वे—ओं भूर्भुवःस्वः स्कन्द इहागच्छ, इत्यावाह्य—

ओं यदक्रन्दः प्रथमं जायमान उद्यन्तसमुद्रादुतवा पुरीषात् । श्येनस्य पक्षा हरिणस्य वाहू उपस्तुत्यं महिजातं ते अर्वन । स्कन्दाय नमः ।

4. बुध दक्षिण पार्श्वे—ओं भूर्भुवः स्वः विष्णोः इहागच्छ इत्यावाह्य—

ओं विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोस्यूरसि विष्णो ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा । विष्णवे नमः ।

5. गुरु दक्षिण पार्श्वे—ओं भूर्भुवः स्वः ब्रह्मण इहागच्छ इत्यावाह्य—

ओं ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वे आवः । सवुध्न्या उपमा अस्यविष्ठाः सतश्चयोनिमसतश्च विवः । ब्रह्मणे नमः ॥

6. शुक्र दक्षिण पार्श्वे—ओं भूर्भुवः स्वः इन्द्र इहागच्छ इत्यावाह्य—

ओं सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रून् अपमृधो नुदस्वाधा भयं कृणुहि विश्वतो नः। इन्द्राय नमः।

7. शनि दक्षिण पार्श्वे—ओं भूर्भुवः स्वः यम इहागच्छ इत्यावाह्य—

ओं असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि। यमाय नमः।

8. राहु दक्षिण पार्श्वे—ओं भूर्भुवः स्वः काल इहागच्छ इत्यावाह्य—

ओं कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि। समापो अद्भिरग्मत् समोषधीभिरोषधीः। कालाय नमः।

9. केतोर्दक्षिण पार्श्वे—ओं भूर्भुवः स्वः चित्रगुप्त इहागच्छ इत्यावाह्य—

ओं चित्रावसो स्वस्ति ते पारमशीय। चित्रगुप्ताय नमः।

अथ प्रति-अधिदेवतानामावाहनम्—पुष्पाक्षतैः

1. सूर्य वामपार्श्वे—ओं भूर्भुवःस्वः अग्ने इहागच्छ इत्यावाह्य—

ओं अग्निदूतं पुरोदधे हव्यवाहमुपब्रुवे । देवां आसादयादिह । अग्न्ये नमः ।

2. सोम वाम पार्श्वे—ओं भूर्भुवःस्वः आपः इहागच्छ इत्यावाह्य—

ओं आपो अस्मान् मातरः शुन्ध्यन्तु । अद्भ्यो नमः ।

3. भौम वामपार्श्वे—ओं भूर्भुवःस्वः भूमे इहागच्छ इत्यावाह्य—

ओं स्योना पृथिवि नो भवानृक्षा निवेशिनी । यच्छानः शर्म सप्रथाः । पृथिव्यै नमः ।

4. बुध वामपार्श्वे—ओं भूर्भुवः स्वः विष्णो इहागच्छ इत्यावाह्य—

ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्यपाँ᳡ सुरे स्वाहा । विष्णवे नमः ।

5. गुरुवामपार्श्वे—ओं भूर्भुवःस्वः भो इन्द्र इहागच्छ इत्यावाह्य—

ओं त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवँ᳡ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं᳡ स्वस्तिनो मघवा धात्विन्द्रः । इन्द्रायनमः ।

6. शुक्र वामपार्श्वे—ओं भूर्भुवः स्वः भो इन्द्राणि इहागच्छ इत्यावाह्य—

ओं अदित्यै रास्नाऽसीन्द्राण्या उष्णीषः । पूऽषासि धर्माय दीष्वः । इन्द्राण्यै नमः ।

7. शनि वामपार्श्वे—ओं प्रजापते इहागच्छ इत्यावाह्य—

ओं प्रजापते नत्वदेतान्यन्यो विश्वा रूपाणि परिता- वभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् । प्रजापतये नमः ।

8. ओं भो सर्पाः इहागच्छ—इत्यावाह्य—

ओं नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । सर्पेभ्यो नमः ।

9. केतु वाम पार्श्वे—ओं भो ब्रह्मण इहागचछ इत्यावाह्य—

ओं ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसोमतः सुरुचो वेन आवः सवुध्न्या उपमा अस्य विष्ठा सतश्च योनिमसतश्च विवः ।। ब्रह्मणे नमः ।

ततो विनायकादीन् पंचलोकपालानावाह्येत्—

ओं गणानां त्वा गणपति ँ हवामहे-प्रियाणां त्वा प्रियपति ँ हवामहे निधीनां त्वा निधिपति ँ हवामहे वसो मम आहम जानिगर्भंधमात्वमजासिगर्भंधम् ।। महागण- पतये नमः ।

ओं अम्बे अम्बिके अम्बालिके न मानयति कश्चन ससत्यश्विकः सुभद्रिकां काम्पील वासिनीम् । दुर्गायै नमः ।।

ओं वातो वा मनो वा गन्धर्वाः सप्तविंशतिः । ते अग्नेऽश्वमंयुञ्जंस्ते अस्मिश्च वमा दधुः ।। अ० 9/7 ।। वायवे नमः ।।

ओं ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीᳬ ष्यग्नेः द्युमत्तमा सुप्रतीकस्य सूनोः ।। अ० 27/11 ।।
आकाशाय नमः ।।

ओं अश्विना भेषजं मधु भेषजं न सरस्वती । इन्द्र त्वष्टा यशः श्रियं रूपᳬ रूप मधुः सुते ।। य० अ० 20/64
सरस्वत्यै नमः ।।

# अथ कुशकण्डिका प्रारम्भः

ततो होमार्थं चतुरंगुलोच्छ्रित हस्तमात्र परिमितां वेदिं कुर्यात् । कुशैः परिसमूह्य तान कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य खादिरेण स्रुवेण चोल्लेखनं हस्तेनोद्धरणं जलेनाभ्युक्षणं कांस्य पात्रयुगलेन लौकिकं निर्मथितंवाऽग्नि-मानीय स्थापयेत् । ततः पुष्पचन्दनताम्बूलवासान्यादाय ओं अद्य कर्तव्यामुक शान्ति होमकर्मणि कृताकृतवेक्षणरूप ब्रह्मकर्म कर्तुममुक गोत्रममुक शर्माणमेभिः पुष्पचन्दन ताम्बूल वासोभिर्ब्रह्मत्वेन—त्वामहं वृणे—इति ब्रह्माणं-वृणुयात् ।

ओं वृतोऽस्मीति प्रतिवचनम् ।

यथाविहितं कर्म कुर्वित्याचार्येणोक्ते

'करवाणि' इति प्रतिवचनम् ।

ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्राग् अग्रान्कुशानादाय, आस्तीर्य अग्निं प्रदक्षिणं कारयित्वा

'अस्मिन्कर्मणि त्वं मे ब्रह्माभव' इत्यभिधाय 'भवानि' इति तेनोक्ते तदुपरि ब्रह्माणमुदङ्मुखमुपवेश्य प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराछाद्य ब्रह्मणो मुखमवलोक्याग्रे उत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणम् । बर्हिषः चतुर्थभागमादायाग्नेरीशनान्तं ब्रह्मणोऽग्नि पर्यन्तं नैर्ऋत्याद्वायव्यान्तमग्नितः प्रणीता 'पर्यन्तं', ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयं प्रोक्षणी पात्रमाज्यस्थाली सम्मार्जनार्थं कुशत्रयमुपयमनार्थं वेणीरूपं कुशत्रयं समिधस्तिस्रः स्रुवः आज्यं षट्पञ्चाशदुत्तराचार्य मुष्टिशतद्वयावच्छिन्नमतण्डुल पूर्णपात्रम् । ततः पवित्रच्छेनदनकुशैः पवित्रेच्छित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां पवित्रे उत्तराग्र गृहीत्वा त्रिरुत्पवनं प्रोक्षणीपात्रं वामकरेणादाय अनामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलं किंचित् त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीमभिषिच्य प्रोक्षणी जलेनासादित वस्तुसेचनं कृत्वाग्नि प्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् । आज्यस्थाल्यामाज्यं निरूप्याधिश्रयणम् । ततः कुशं प्रज्वाल्याज्योपरि भ्रामयित्वा वह्नौ तत् प्रक्षिप्य स्रुवं त्रिः प्रतप्य, संमार्जन कुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिप्रतप्य दक्षिणतो निदध्यात् ।

आज्यस्याग्नेरवतारणं ततः आज्यं प्रोक्षणीवदुत्पूयावेक्ष्यं सत्यपद्रव्येतन्निरसनं कृत्वा पुनः प्रोक्षणोमुत्पूय तत उत्था-योपयमनकुशान्वाम हस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधः तिस्रः क्षिपेत् ।

उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं प्रणीतपात्रे पवित्रे-निधाय पातित दक्षिणजानुः कुशेन व्रह्मणान्वारब्धः समिद्धतमे अग्नौ स्रुवेणाज्याहुतीर्जुहोति । तत्तदा—

आहुत्यनन्तरं स्रुवावस्थित घृत-शेषस्य प्रोक्षणी पात्रे प्रक्षेपः ।

अथ स्रुव पूजनम्—

ॐ आवाहयाम्यहं देवं स्रुवं शेवधिमुत्तमम् ।
स्वाहाकारं स्वधाकारं वषट्कार समन्वितम् ॥
अष्टांगुलं त्यजनेन्मूलमग्रे त्यक्त्वा दशांगुलम् ।
कर्त्तव्यंगोपदाकारं दण्डऽस्याग्रे तु कंकणम् ॥
विष्णोः स्थानं प्रगृह्णीयाद्धूयते च हुताशनम् ।
पद्मयोनिं समादाय होता सुखमवाप्नुयात् ॥
इति स्रुवपूजनम् ॥

ॐ प्रजापतये स्वाहा, इदं प्रजापतये । इन्द्राय स्वाहा इदमिन्द्राय ॥ इत्याघारौ । ओमग्नये स्वाहा इदमग्नये । ओं सोमाय स्वाहा । इदं सोमाय न मम । इत्याज्यभागौ । ओं भः स्वाहा इदं भूः ओं स्वःस्वाहा इदं स्वः ॥ 1 ॥

ओं तन्नोऽग्ने वरुणस्य विद्वान् देवस्यहेडो अवयासि-

सीष्ठः । यजिष्ठो बह्नि्नतमः । शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदं अग्निवरुणाभ्यां न मम ।

ओं सत्वन्नोऽग्नेवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्व नो वरुणꣳ रराणो ब्रीहिमृडीकꣳ सुहवो न एधि स्वाहा ॥ 2 ॥ इदमग्नीवरुणाभ्यां नमम ॥

ओं अयाश्चाग्नेस्य नभिशस्तिपाश्च सत्यमित्त्व मया असि । अयानो यज्ञं वहास्य यानो धेहि भेषजꣳ स्वाहा । इदमग्नये न मम ॥ 3 ॥ ओं ये ते शतं वरुण ये सहस्त्रं यज्ञियाः पाशा वितता मह्रान्तस्तेभिर्नोऽद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ 4 ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ 4 ॥

ओं उदुत्तमं वरुण पाशमस्मदबाधमं विमध्यमꣳ श्रथाय अथावयमादित्य व्रते तवानागसोऽदितये स्याम स्वाहा ॥

इदं वरुणाय नमम ॥ एताः प्रायश्चित्त संज्ञकाः ।

ततोऽन्वारम्भं विना—

ओं गणपतये स्वाहा । ओं ब्रह्मणे स्वाहा । ओं विष्णवे स्वाहा । ओं शम्भवे स्वाहा । ओं प्रणवाय स्वाहा । ओं मातृभ्यः स्वाहा । ओं वरुणाय स्वाहा । ओं सूर्याय स्वाहा । ओं चन्द्रममे स्वाहा । ओं भौमाय स्वाहा । ओं बुधाय स्वाहा । ओं वृहस्पतये स्वाहा । ओं शुक्राय स्वाहा । ओं शनैश्चराय स्वाहा । ओं राहवे स्वाहा । ओं केतवे स्वाहा ।

ओं अम्बिकायै स्वाहा । ओं महालक्ष्म्यै स्वाहा । ओं स्कन्दाय स्वाहा । ओं इन्द्राय स्वाहा । ओं अग्नये स्वाहा । ओं यमाय स्वाहा । ओं नैर्ऋतये स्वाहा । ओं वरुणाय स्वाहा । ओं वायवे स्वाहा । ओं कुबेराय स्वाहा । ओं ईशानाय स्वाहा । ओं अनन्ताय स्वाहा । ओं ब्रह्मणे स्वाहा । ओं गणपतये स्वाहा । ओं दुर्गायै स्वाहा । ओं वायवे स्वाहा । ओं उग्राय स्वाहा । ओं भीमाय स्वाहा । ओं पुष्टयै स्वाहा । ओं अग्नये स्वाहा इति स्विष्टकृद्होमः ।

ततः संस्रवप्राशनम् । आचमनं च । ततः ब्रह्मणे दक्षिणां दद्यात् । ओं अद्य कृतैतच्छान्ति होम कर्मणि कृता-कृताऽवेक्षण रूप ब्रह्म कर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापति दैवतं यथा नाम गोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे । ओं स्वस्तीति प्रतिवचनम् । ततो ब्रह्मग्रन्थि विमोकः । ओं सुमित्रियान आपः औषधयः सन्तु इति पवित्रेण प्रणीता जलेन शिरः सम्मृज्य—ओं दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इत्यैशान्यां प्रणीता न्युब्जीकरणम् । ततः आस्तरण क्रमेण वर्हिरुत्थायाज्येनभिधार्य हस्तेनैव जुहयात् । ओं देवागातु विदोगातुं वित्वागातुमितमनसस्पत इमं देव यज्ञं$^{\text{ઇ}}$ स्वाहा वातेधा स्वाहा । ततः उत्थाय घृत पुष्प फलेन पूर्णाहुतिर्दद्यात—ओं मूर्द्धानंदिवो अरतिं पृथिव्या वैश्वानर-मृत अजातमग्निं कवि$^{\text{ઇ}}$ संम्राजमतिथिं जनानामासन्ना पात्रं जनयन्तु देवाः स्वाहा ।

ततः उपविश्य स्रुवेण भस्ममानीय दक्षिणानामिकया ग्रहीतभस्मना। ओं त्र्यायुषं जमदग्ने इति ललाटे । ओं कश्यपस्य त्र्यायुषं इति ग्रीवायाम् । ओं यद्देवेषु त्र्यायुषंइति दक्षिण बाहु मूले। ओं तन्नोऽस्तु त्र्यायुषमिति हृदि। यजमानपक्षे तन्नो इत्यस्य स्थाने तत्तो इति विशेषः ।

ततः मुखावलोकनम्—ओं अद्य कृतैतच्छान्ति होम कर्मणि कृताकृतावेक्षेणरूपं इदं छायापात्रं यथानाम गोत्राय ब्राह्मणे तुभ्यमहं सम्प्रददे ।

दक्षिणादातम्=अद्य कृतैतच्छान्ति होम कर्मणि इमां दक्षिणां अमुक गोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

पश्चात् ग्रहाणां विसर्जनम्--

आगतास्तु यथा न्यायं पूजितास्तु यथाविधिः।
कृत्वा मयि कृपां देवाः यत्रागतास्तत्रगच्छतु ।
यजमान हितार्थाय पुनरागमनाय च ।
शत्रूणां बुद्धिनाशाय मित्राणामुदयाय च ॥

ततः सूर्याय अर्घ्यं दद्यात् कृतांजलिःप्रार्थयेत् ।

इति कात्यायनीशान्तिः

———

## अभिषेक मन्त्राः

ओं सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णु महेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥१॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमोवै नैऋर्तिस्तथा ॥२॥
वरुणः पवनश्चैव धनाध्यक्षः शिवस्तथा ।
ब्रह्मणा सहिताः शेषो दिग्पालाः पांतु ते सदा ॥३॥
कीर्तिलंक्ष्मीधृतिर्मेधा पुष्टिः श्रद्धा क्रिया रतिः ।
बुद्धि र्जातिर्वपुऋर्द्धि स्तुष्टिर्हृष्टिश्च मातरः ॥४॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्य चन्द्रभौमाश्च वुधजीव सितार्कजाः ॥५॥
ग्रहास्त्वामभिषिञ्चन्तु राहुकेतु स्तथैव च ।
देवदानवगन्धर्वाः यक्षराक्षसपन्नगाः ॥६॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा, नागाः देव्याश्चाप्सरसां गणाः ॥७॥
अस्त्राणि चैव शस्त्राणि शतशो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥८॥
सरितः सागराः शैलास्तीर्थानि जलदास्तथा ।
एते त्वामभिषिञ्चन्तु धर्मकामार्थ सिद्धये ॥९॥

इति वारुण कलशाभिषेकः

———

॥ श्रीगणेशायनमः ॥

# षोडशसंस्कार विधि-प्रस्ताविका

श्रीमन्महागणाधिपतये नमः । गौतमस्मृतौ चत्वारिंशत्संस्काराः प्रदर्शिता : । यथा—गर्भाधान पुंसवनं सीमन्तोन्नयनं जातकर्म नामकर्म निष्क्रमणमन्नप्राशनं चौलोपनयने चत्वारि वेदव्रतानि केशान्तस्नाने सहधर्मचारिणी संयोगः । पञ्चमहायज्ञा अष्टकाः पार्वणश्राद्धानि श्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकसंस्थाः अग्न्याधेयमग्निहोत्रं दशपौर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुः सौत्रामणीति सप्तहविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्र

---

भावार्थ :—श्री गणेश जी को नमस्कार करके संस्कारों का विचार दिखाया जाता है । गौतम स्मृति में चालीस संस्कार दिखाये हैं-१- गर्भाधान । २-पुंसवन । ३-सीमन्तोन्नयन । ४-जातकर्म । ५-नामकरण । ६-निष्क्रमण । ७-अन्नप्राशन । ८-चूड़ाकर्म । ९-उपनयन । १०-१३-चारों वेदों के चार वेदारम्भ । १४-केशान्त । १५-समावर्तन । १६-विवाह १७-पञ्चमहायज्ञ । १८-अष्टकाश्राद्ध । १९-पार्वणश्राद्ध । २०-श्रावणीकर्म । २१-आग्रहायणी कर्म । २२-चैत्री (चैत्रमास की पौर्णमासी में विहित स्मार्त) कर्म । २३-आश्वयुजी (आश्विन मास की पौर्णमासी को विहित स्मार्त) कर्म । ये पञ्च महायज्ञादि सात पकाये अन्न से होने के कारण पाकयज्ञ कहाते हैं । २४-अग्न्याधेय (श्रौताधान) कर्म । २५—अग्निहोत्र । २६-दर्श पौर्णमासयाग । २७-चातुर्मास्य यागों के वैश्वदेव वरुणप्रघास, साकमेध, शुनासीरीय ये चारों पर्व । २८-आग्रयण (नवान्नेष्टि) २९-निरूढपशुयाग । ३०-सौत्रामणीयाग । ये अग्न्याधेयादि सात दुग्ध धृत तथा पुरोडाशादि हविषों से होने के कारण हविर्यज्ञ कहाते हैं । ३१-अग्निष्टोम । ३२-अत्यग्निष्टोम । ३३-उक्थ्य । ३४-षोडशी ।

आप्तोर्यामइति सप्तसोमयज्ञसंस्थाः । उपाकर्मोत्सर्जनं पैतृमेधिकं च । एते चत्वारिंशत्संस्काराः । आङ्गिरसस्मृतौ पञ्चविंशति-संस्कारा उक्ताः । ते यथा—

गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकर्मनामकर्म निष्क्रमोऽन्नाशनपरम् ।। 1 ।।
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौचाग्रयणमष्टकाश्च यथातथम् ।। 2 ।।
श्रावण्यामाश्वयुज्यांच मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्चनित्यशः ।। 3 ।।
संस्कारानि यताह्येते ब्राह्मणस्य विशेषतः ।। 4 ।।
व्यासस्मृतौ तु प्रथमाध्याये षोडशसंस्कारा उक्ताः ।

---

३५-वाजपेय । ३६-अतिरात्र । ३७-आप्तोर्याम । ये सात सोमलता से होने के कारण सप्त सोमयाग कहाते हैं । ३८-उपाकर्म । ३९-उत्सर्ग । ४०-पितृमेध । ये चालीस संस्कार कहाते हैं । इन सबके यथावत् अनुष्ठान से मनुष्य अच्छा संस्कृत-मनवाणी शरीर से सम्यक् पाप रहित शुद्ध हो जाता है । द्वादशाह गवानयनादि तथा सत्रयाग सोमयागों के विकार हैं तथा राजसूय अश्वमेध क्षत्रिय राजाओं के निज कर्त्तव्य यज्ञ हैं । अङ्गिरा ऋषि ने पच्चीस संस्कार कहे हैं उन में चौथा विष्णु वलि कर्म है, केशान्त को छोड़ के विवाह तक गौतमोक्त संस्कारों के तुल्य हैं । पाकयज्ञों में चैत्री कर्म को छोड़ के पूर्वोक्त पञ्चमहायज्ञादि छः लिये हैं । हविर्यज्ञों में से ६ एक आग्रयण यथा दो उपाकर्म और उत्सर्ग ये सब पच्चीस संस्कार कहाते हैं । इनमें हविर्यज्ञ और सोमयज्ञ सभी छूटे जानो । एक आग्रयणेष्टि जो लिया है वह गृह्यसूत्रोक्त नवान्नेष्टि लेना इष्ट है । इससे श्रौतकर्म सभी छूटे समझो । और व्यासस्मृति के प्रथमाध्याय में जो षोडशसंस्कार कहे हैं सो नीचे लिखते हैं । १-गर्भाधान । २-पुंसवन । ३-सीमन्तोन्नयन । ४-जातकर्म ।

यथा—
गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया ॥ 1 ॥
कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ।
केशान्तःस्नानमुद्वाहो विवाहाग्नि परिग्रहः ॥ 2 ॥
त्रेताग्निसंग्रहश्चेति संस्काराः षोडशस्मृताः ।
नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियः ॥ 3 ॥
विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतोदश ॥ 4 ॥

महर्षिगौतमेन दर्शिताश्चत्वारिंशत्संस्काराः सत्ययुगादावनुष्ठातुं शक्याः संप्रति कलौ षोडशाऽपि नानुष्ठीयन्तेऽविद्याग्रस्तैर्जनैः । अङ्गिरसोक्ताष्टकादिकर्मणामपि केषाञ्चित्कालो न दृश्यतेऽतएव मयाऽत्र व्यासोक्ता एव षोडशसंस्काराः शुक्ल-

---

५-नामकरण । ६-निष्क्रमण । ७-अन्नप्राशन । ८-चूडाकर्म । ९-कर्णवेध । १०-यज्ञोपवीत । ११-वेदारम्भ । १२-केशान्त । १३-समावर्तन । १४-विवाह । १५-आवसथ्याधान [विवाहाग्निपरिग्रह] १६-श्रौताधान । इन में से कर्णवेध पर्यन्त नौ संस्कार द्विज कन्याओं के वेदमन्त्रों को छोड़ कर स्मार्त्त मन्त्रों से वा नाम मन्त्रों से कर्त्तव्य हैं परन्तु इन कर्मों में जो होम का विधान है वह कन्याओं के संस्कारों में भी बेदमन्त्रों से ही होना चाहिए । दशम विवाह संस्कार वर कन्या दोनों का साथ होने से वेदमन्त्रों द्वारा ही कर्त्तव्य है । कर्णवेध पर्यन्त नौ और दशवां विवाह ये दश संस्कार शूद्रों के वेदमन्त्र छोड़ के स्मार्त मन्त्रों से होने चाहिएं । अर्थात् शूद्रों के लिए अमन्त्रक दश ही संस्कार शास्त्रकारों ने कहे हैं । महर्षि गौतम के दिखाये चालीस संस्कार सत्ययुगादि में यथोचित रीति से हो सकते हैं । इस समय श्रद्धाहीन अविद्याग्रस्त ब्राह्मणादि जब सोलह संस्कार भी ठीक-२ नहीं करते तब चालीस की कौन कहे ? अङ्गिरा ऋषि के कहे किन्हीं अष्टका श्राद्धादि कर्मों का भी अब समय नहीं है । इसी से व्यास जी के कहे सोलह संस्कार शुक्ल यजुर्वेदीय बाजसनेयी शाखा के अनुसार इस संस्कार विधि पुस्तक में

यजुर्वेदीयवाजसनेयीशाखामनुसृत्य व्याख्याताः । कर्णवेधकर्म कैश्चिदाचार्यैः संस्कारेषु परिगणितं कश्चिन्न परिगणितम् । चतुर्णां वेदानामारम्भसंस्कारा गौतमादिमहर्षिभिश्चत्वारोऽभिमताः । संप्रति संस्कारभास्करादिग्रन्थेष्वप्यन्यस्मृत्यनुकूलतया वेदारम्भसंस्कारांश्चतुरो मत्वोद्वाहान्ताः षोडशसंस्कारा अभिमताः । चतुर्णां वेदानामारम्भसंस्कार एकोऽपि व्यासादिभिरभिमतस्तदनुकूलमेवास्मिन्संस्कारविधौ षोडशसंस्कारा वर्णिताः। पञ्चमहायज्ञादिपाकयज्ञानामाश्रयोऽऽवसथ्याधानं मूलमागतं तस्मिन्नेव तेषां कर्त्तव्यत्वविधानात् । अग्निष्टोमादिसप्तसोमसंस्थानामग्निहोत्रादिसप्तहवि.संस्थानां चाधिष्ठानं श्रौताग्नयस्तेष्वेव सर्वेषां विधानात् । तस्याधानमप्यत्र पुस्तके प्रतिपाद-

---

नित्ते हैं । कर्णवेध कर्म को किन्हीं आचार्यों ने संस्कारों में नहीं गिना किन्हीं ने गिना है । चारों वेद के आरम्भ संस्कार गौतमादि ऋषियों ने चार पृथक् २ माने हैं और वर्त्तमान काल के संस्कार भास्करादि ग्रन्थों में भी अन्य स्मृति प्रमाणों के अनुकूल वेदारम्भ संस्कारों को चार मान कर विवाह पर्यन्त षोडशसंस्कार माने है । और व्यासादि कई महर्षियों ने वेदारम्भ संस्कार एक भी माना [एक में ही सब वेदों का आरम्भ आ जाता है] है। इसी पक्ष के अनुसार हमने भी वेदारम्भ को एक संस्कार मान के इस पुस्तक में षोडशसंस्कारों का वर्णन किया है । पञ्चमहायज्ञादि सब पाकयज्ञों का आधार व मूल आवसथ्याधान कर्म है क्यों कि उसी आवसथ्याग्नि में उन कर्मों के करने का विधान है । अग्निहोत्रादि सात हविर्यज्ञ और अग्निष्टोमादि सात सोमयज्ञ इन सब यागों का आधार श्रौताग्नि हैं, क्यों कि इन्हीं श्रौताग्नियों में अग्निहोत्रादि का विधान है । इन श्रौत स्मार्त्त द्विविध अग्नियों के स्थापन का विधान इस पुस्तक में आजाने से एक प्रकार से महर्षि गौतम के कहे सभी संस्कार इस पुस्तक में समाविष्ट हुये माने जा सकते हैं । इस कारण वेदारम्भ संस्कारों को चार न मान कर

नादेकरीत्या गौतममहर्ष्युक्ताः सर्वे चत्वारिंशदपि संस्कारा अस्मिन्पुस्तके समाविष्टा बोध्याः । अतो वेदारम्भसंस्काराणां चतुष्ट्वापेक्षयाऽऽधानसंस्कारद्वयसंयोजनेन् षोडशत्वसम्पादनपक्षाः मयोचितोऽवगतः । तत्र मनुस्मृतौ द्वितीयेऽध्याये सामान्यं सर्वसंस्कारफलम् ।

वैदिकैः कर्मभिः पुण्यै-र्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ 1 ॥
गार्भैर्होमैर्जातकर्म—चौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकंचैनो द्विजानामपमृज्यते ॥ 2 ॥
स्वाध्यायेन व्रतैर्होमै—स्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्चयज्ञैश्च ब्राह्मीयंक्रियतेतनुः ॥ 3 ॥

---

के किन्तु एक ही मानकर दो आधान संस्कारों को जोड़ देने द्वारा षोडश-संस्कारों के परिगणन का पक्ष विशेष उपयोगी समझकर लिखा है । अब यहां संस्कारों के प्रयोजन दिखाते हैं—मानव धर्मशास्त्र के द्वितीयाध्याय में संस्कारों का सामान्य फल वा प्रयोजन निम्नलिखित दिखाया है कि वेदोक्तगर्भाधानादि पुण्य कर्मों द्वारा ब्राह्मण क्षत्रिय वैश्य नामक द्विजों के शरीरों का इस लोक तथा परलोक में पवित्र करने वाला संस्कार करना चाहिए । गर्भ समय के तीन संस्कारों में तथा जातकर्म चूड़ाकर्म और उपनयनादि संस्कारों में होने वाले होमों से बीज और गर्भ सम्बन्धी द्विजों की अशुद्धियां नष्ट हो जाती हैं और वेदमन्त्रों के प्रभाव से मन में शुभ संस्कारों का संचय होता है । वेदारम्भ द्वारा वेदाध्ययन कर लेने पर हो सकने वाले स्वाध्याय व्रत और होमों से त्रयी विद्या के ज्ञान से यागानुष्ठानों से विवाह द्वारा पुत्रोत्पत्ति से पञ्चमहायज्ञों से और अग्निष्टोमादि यज्ञों के अनुष्ठान ब्राह्मणादि का शरीरस्थ जीव ब्रह्मप्राप्ति योग्य किया जाता है । स्मृतिसंग्रह में लिखा गर्भाधानादि संस्कारों का विशेष २ फल आगे दिखाते हैं । शास्त्रोक्त

अस्मिन्पुस्तके षष्ठीपूजनाद्यवान्तरकर्माण्यपि कानिचिदुपयुक्तानि मध्ये मध्ये विन्यस्तानि । तान्यपि आस्तिकैर्यथाकालं यथाविध्यनुष्ठेयानीति निवेद्यते ।

अग्रेकर्मोपयुक्ता विशिष्टपरिभाषा लिख्यन्ते—

संकल्पेनविनाकर्म यत्किंचित्कुरुते नरः
फलंचाप्यल्पकं तस्य धर्मस्यार्द्धक्षयोभवेत् ।

---

विधि से किये गर्भाधान से बीज सम्बन्धी और गर्भवास की मलिनता सम्बन्धी दोष नष्ट होता है और सन्तानोत्पत्ति का खेत रूप स्त्री का संस्कार होना भी गर्भाधान का फल वा प्रयोजन है । गर्भ हो जाने पर पुंसवन संस्कार से कन्या शरीर न बन कर पुत्र शरीर बनना फल है । गर्भाधान का फल ही सीमन्त का फल जानो । गर्भ में माता के आहार रस के पीने का सब दोष जातकर्म संस्कार से नष्ट होजाता है, आयु तथा तेज की वृद्धि और नाम से व्यवहार की सिद्धि होना नामकरण संस्कार का फल ऋषियों ने कहा है । निष्क्रमण में सूर्यनारायण का समन्त्रक दर्शन कराने से आयु की वृद्धि होना तथा निष्क्रमण से आयु और लक्ष्मी की वृद्धि होना भी फल या प्रयोजन है । माता के गर्भ में मलिनता भक्षण का जो दोष लगता है वह अन्नप्राशन से शुद्ध हो जाता है । वल आयु और तेज की वृद्धि होना चूड़ाकर्म संस्कार का फल है । द्विजत्व सिद्धि पूर्वक वेदाऽध्ययन का अधिकारी होना उपनयन का फल या प्रयोजन ऋषियों ने कहा है । सपत्नीक मनुष्य ही आधान पूर्वक अग्निहोत्र तथा दर्श पौर्णमासादि याग कर सकता है । और ब्रह्मादि शास्त्रोक्त विवाह विधि से प्राप्त पत्नी द्वारा उत्पन्न हुआ पुत्र पितरों का तार देने वाला होता है यह विवाह का फल ऋषियों ने कहा माना है । शेष संस्कारों का प्रयोजन भी उक्त फलों के तुल्य ही जानो । तात्पर्य यही है कि अपवित्रता रूप पापों की निवृत्ति और पवित्रतारूप पुण्य का प्रादुर्भाव मन वाणी और शरीर में होना सब संस्कारों का मुख्य

प्रयोजन है। इस पुस्तक में षष्ठी पूजनादि रूप संस्कारों के अवान्तर कई कर्मों का विधान बीच २ में दिखाया है। उनको भी यथाविधि यथासमय श्रद्धालु आस्तिक लोग करें ऐसा निवेदन किया जाता है।

यहां से आगे सब कर्मों में उपयोगी परिभाषाओं का विचार दिखाते हैं—संकल्प किये बिना मनुष्य जो कुछ कर्म करता है उसका फल अल्प है और आधा धर्म घट जाता है। इससे युग मास पक्षादि काल और आर्यावर्त्तान्तर्गत प्रदेशादिका कीर्त्तन कर अभीष्ट सिद्धि रूप निमित्त दिखाकर मैं अमुक करूंगा ऐसा संकल्प अवश्य किया करे। अपनी शाखा में कहे विधान का उल्लंघन न करके कर्म करे जिस कर्मांश का विधान अपनी शाखा में न हो उतना अन्य शाखा से ले लेवें। जितना कर्मांश विधान से विरुद्ध अन्यथा हो गया प्रतीत हो उसको फिर से कर लेवे, यदि प्रधान कर्म अन्यथा विधि से विरुद्ध हो गया हो तो सब अङ्गों सहित फिर से करे। यदि कोई अङ्ग ठीक न हुआ हो तो उसका प्रायश्चित्त मात्र करे। उस अङ्ग को फिर से न करे। सब मङ्गलों के मंगलस्वरूप वरदाता श्रेष्ठ नारायण भगवान को प्रणाम करके सब कर्मों को आरम्भ करे। जप होम और उपवासों के आरम्भ में स्वयं वा सजातीय शिष्यादि से धोये वस्त्र धारण करे। स्वर्ण का अलङ्कार धारण किये जितेन्द्रिय श्रद्धालु और मौन होकर कर्मों को करे। जपादि कर्मों में यदि मौन भंग होजाय तो (इदं विष्णु०) मन्त्र को पढ़ने व अविनाशी विष्णु भगवान् का स्मरण करने रूप प्रायश्चित करे। जो प्रक्षालन द्वारा धोया नया श्वेत चीरेदार और अन्य का धारण किया न हो ऐसा वस्त्र अहत कहाता है वही सब कर्मों में पवित्र माना गया है। रुद्र, पितर, असुर, राक्षसादि देवता वाले और अभिचार नाम शत्रु वध सम्बन्धी मन्त्रों का होमादि कर्म से उच्चारण करके हृदय का स्पर्श कर दाहिने हाथ से प्रणीता जल का स्पर्श कर लिया करे। तथा पितरों सम्बन्धी मन्त्र बोलने, किसी नीच को देखने, अपानवायु निकलने, हंस पड़ने, मिथ्या भाषण करके, बिल्ली मूषकादि के छू जाने,

गाली देने और क्रोध आजाने पर इन सब निमित्तों में होम जपादि करते हुए हृदय तथा जल का स्पर्श करना ही प्रायश्चित है। जहां कर्त्ता का हस्तादि अङ्ग नहीं कहा गया हो कि अमुक अङ्ग से यह करे वहां सर्वत्र दाहिना अङ्ग जानो। जहां जप होमादि कर्म में दिशा का नियम न लिखा हो वहाँ सर्वत्र पूर्व उत्तर और ईशान इनमें से किसी दिशा में मुख करके कर्म करे जहां यह नहीं कहा हो कि खड़े होके बैठकर वा झुक कर कर्म करे, वहाँ सर्वत्र बैठ कर कर्म करना जानो। सदाचारी वेदवेत्ता विद्वान् ब्राह्मण ब्रह्मा न मिलने पर पचास कुशों का दाहिना ऐंठ कर ब्रह्मा बनावे व गोलाकार व्रीड़रूप ब्रह्मा बनाकर अग्रभाग में गांठ लगावे और पच्चीस पच्चीस कुशों को बायीं ओर से ऐंठ कर विष्टर बनावे। जिनके भीतर अन्य कुश न हों ऐसे अग्रभाग सहित दो कुशों को छेदन कर प्रादेशमात्र दो पवित्र बनावे। अनामिका अंगुली में पहनने की पवित्री चार तीन अथवा दो कुशों की सब वर्णों की बनावे उनमें गांठ भी लगावे। सब कर्मों में दर्भ कृष्णाजिन, मन्त्र, ब्राह्मण, ऋत्विज, होम के पदार्थ और अग्नि इन सबको भिन्न २ कर्मों में फिर २ से नियुक्त करे। किन्तु पहिले कर्म में नियुक्त किये दूसरे में न लगावे। कर्म के साथ सव्य यज्ञोपवीतधारी और शिखा में गांठ लगा लेवे खुली शिखा रखकर न करे। श्वेत चन्दन या मिट्टी आदि को छोड़ के सब माङ्गलिक कर्मों में केसर का तिलक लगाए। ओंकार सहित पावन मन्त्र के अन्त में स्वाहा पद बोल कर मन्त्र देवता का ध्यान करता हुआ त्याग वाक्य के अन्त में आहुति छोड़े। शमी-न्यग्रोध, पलाश-ढाक, वट, प्लक्ष पाकर विकङ्कत, पीपल, उदुम्बर-गूलर, विल्व, चन्दन, सरल देवदारु और खदिर इनमें से जिस किसी एक वृक्ष की समिधा होम में लगावे ये सब यज्ञियवृक्ष कहाते हैं, आम्रवृक्ष यज्ञ के योग्य नहीं माना है। जो तीन समिधा मन्त्र द्वारा होम के लिए लिखा है वे अंगुष्ठ तुल्य मोटी त्वचा सहित कीट रहित, बिन फटी अन्य शाखा पत्ते जिनमें न लगे हों ऐसी प्रादेशमात्र हों, ऐसी समिधा मधु, घी, दही वा दुग्ध में डुबोकर अग्नि में चढ़ावे। समिधा पुष्प और कुश इनको ब्राह्मण स्वयं लाया करे किन्तु

शूद्र से न मंगावे वा मूल्य द्वारा न लेवे । जो मनुष्य अङ्गार रहित अप्रज्वलित अग्नि में होम करता है उसको मन्दाग्नि वा अन्य रोग होते हैं और दरिद्र हो जाता है। तिससे प्रज्वलित अग्नि में ही होम करे अप्रज्वलित में नहीं, धौंकनी द्वारा मुख से ही फूंक मार कर अग्नि को जलावे व्यजनानि से नहीं, क्योंकि विराट् के मुख से अग्नि उत्पन्न हुआ है। धूम उठते हुए अग्नि में होम करने वाला विद्वान यजमान पुत्र सहित अन्धा वा मन्द दृष्टि हो जाता है इससे सम्यक् प्रज्वलित अग्नि में ही होम करना चाहिए।

होमादि कर्म में विहित वस्तु प्राप्त नहीं होने पर उसी तुल्य अन्य पदार्थ से काम चलाएं। जैसे जौ के न मिलने पर गेहूं, व्रीहि के अभाव में शालि के चावल, कुशों के अभाव में काश व दूर्वा इत्यादि । जहाँ होम का पदार्थ न कहा हो वहां घृत जानो । जहाँ कोई मन्त्र का देवता न कहा हो वा न जान पड़े वहाँ प्रजापति देवता जानो । दधि के अभाव में दुग्ध, मधु के स्थान में गुड; घी के स्थान में दुग्ध या दधि जानो । घी से कहे होमादि में गोघृत जानो, उसके अभाव में महिषी का, उसके भी अभाव में वकरी या भेड़ का, उसके अभाव में तिल तैल, उसके भी अभाव में वन्य तिलों का तैल, उसके अभाव में कुशुम्भ का तैल, उसके भी अभाव में सरसों के तैल से होमादि करे । कनिष्ठिका अंगुल के मूल में प्रजापति तीर्थ, प्रदेशिनो अंगुल के मूल में पितृ तीर्थ, अंगुष्ठ के मूल में ब्रह्मतीर्थ और सव अंगुलियों के अग्रभाग देवतीर्थ कहाता है । हाथ से अन्न तिलादि की आहुति में चारों अंगुलियों के बारहों पर्व भरके आहुति छोड़े, रसादि की आहुति स्रुवा वा स्रुच् भरके छोड़े, देवतीर्थ से अन्नादि का होम सम्यक् प्रज्वलित अग्नि में करे। होम से पहिले चढ़ाई समिधा के मूल से दो अंगुल छोड़ के घी दुग्धादि द्रव्यों की दाहिने हाथ की मध्यमा अनामिका और अंगुष्ठ से स्रुवा को पकड़ के सर्वत्र आहुति देनी चाहिए । एक ग्राम परिमित चरु की आहुति हाथ से छोड़े, घी की आहुति स्रुवा से

देवे, स्रुवा न हो तो यज्ञ के योग्य वृक्ष के पत्ते से आहुति देवे। घृत तथा अन्य गीले दुग्धादि वस्तु एक कर्ष नाम सोलह मासा की आहुति देवे। मन्त्र के ऋषि देवता छन्द और विनियोग विशेष कर ब्राह्मण को जान लेने चाहिएं। याजन, अध्ययन, जप, होम और जल में होने वाले स्नानाघमर्षणादि कर्मों को ऋष्यादि के जाने बिना करने से अल्प फल होता है। सुवर्ण, वज्र-मणि, नीलमणि, पद्मराग और मोती ये पांचों पञ्चरत्न कहलाते हैं। अथवा नारद के मतानुसार-वज्रमणि, माणिक्य, वैदूर्य, पुष्पराग और इन्द्रनीलक ये पञ्चरत्न कहलाते हैं। हल्दी, केशर, सिन्दूर, कज्जल और कंचुकी (अंगिया) ये सब स्त्री के माङ्गलिक चिन्ह हैं। गायत्री मन्त्र से गोमूत्र, (गन्धद्वारां०) से गोमय, (आप्यायस्व०) मन्त्र से गो दुग्ध, (दधिक्राब्ण०) मन्त्र से गोदधि और (तेजोऽसिशुक्र०) से गोघृत लेकर (देवस्यत्वा०) मन्त्र से कुशोदकका ग्रहण करे यही पञ्चगव्य कहाता है। ताम्रवर्णा गौ का आठमासे गोमूत्र, श्वेत गौ का सोलह मासे गोवर, पीली गौ का वारहमासे दुग्ध, काली गौ का आठ मासे घृत और चार मासे कुशोदक लेना चाहिए। पांच रत्ती का एक मासा जानो। घी दुग्ध और मधु इन तीनों को मधुत्रय कहते हैं, दुग्ध, दधि, घृत, मधु और शर्करा ये पांचों एकत्र किये सब देवों को प्रसन्न करने वाला पंचामृत कहाता है। पीपल, गूलर, प्लक्ष, पाकरि, आम और वट इन पांचों के पत्ते पञ्चपल्लव कहाते हैं। कपूर, अगर, कस्तूरी, चन्दन और कंकोल मिर्च इन पांचों का पीसा हुआ लेप यक्षकर्दम कहाता है। कपूर चन्दन, कस्तूरी, केशर ये चारों सब देवों का प्रिय सर्वगन्ध कहाते हैं। कूट, जटामांसी, हल्दी, दारुहल्दी, मोरवेल, शिलाजीत, चन्दन, वच, चम्पक-गन्ध, फल और नौथा ये दश सर्वौषधि कहाती हैं। जल, दुग्ध, कुशों के अग्रभाग, दधि, अक्षत तिल, और सिद्धार्थक-श्वेत शिरीष इन आठों का संग्रह अष्टाङ्ग अर्घ कहाता है। सुवर्ण, चांदी, तांवा, पीतल, लोहा, जस्ता और सीसा ये सप्तधातु कहलाते हैं। छः भाग कूट, दो भाग गुण, तीन भाग लाक्षा, नखी नामक द्रव्य

पांच भाग हरीतकी १ राल १ जावित्री जायफल लवंग तीन तीन भाग शिलाजीत एक भाग, नागरमोथा चार भाग, अगुरु एक भाग इन दशों को कूट कर बनाया दशाङ्ग धूप कहाता है। सुवर्ण, चाँदी, तांवा वा मिट्टी के अच्छे दर्शनीय घट यात्रा, प्रतिष्ठा और विवाह में अभिषेक करने के लिए होने चाहियें, राजादिके लिए सुवर्णदि के घट होने चाहिएं, पूजन के लिए किसी ताम्रादि धातु का व मिट्टी का जो कलश स्थापित किया जाय उसके ऊपर श्वेत चावलों से भरा एक पात्र रखना चाहिए। जौ, गेहूं, तिल, कंगुनी, मूंग, श्यामाक और चना ये सप्त धान्य कहलाते हैं। अश्वस्थान, हस्तिस्थान, विल, चतुष्पथ, गह्वर, जलाशय, राजद्वार और गोशाला इन सात स्थानों से ग्रहण की मिट्टी सप्तमृत्तिका कहाती हैं।

संस्कारादि भिन्न २ कर्मों में अग्नियों के भिन्न २ नाम धर्मसिन्धु में कहे यहां दिखाते हैं, गर्भाधान में मारुत नामक अग्नि, पुंसवन में पावमान, सीमन्तोन्नयन में मंगल, जातकर्म में प्रवल, नामकरण में पार्थिव, अन्नप्राशन में शुचि, चूडाकर्म में सभ्य, उपनयन में समुद्भव, केशान्त में सूर्य, विवाह में योजक, आवसथ्याधान में द्विज, प्रायश्चित्त में विद्, पाकयज्ञों में पावक, पितृयज्ञों में कव्यवाहन, शान्ति कर्म में वरदाता, पुष्टि कर्मों में नलवर्द्धन, अन्त्येष्टि कर्म में क्रव्याद, पूर्णाहुति में मृड, अभिचार-[मारणप्रयोग] में क्रोधाग्नि, बशीकरण में पावक, वनदाह में दूषक, उदर में वैश्वानर, वैश्व देव होम में रुक्म, लक्ष होम में वह्नि, कोटि होम में हुताशन, समुद्र में बडवानल, अग्निहोत्र में गार्हपत्य आहवनीय और दक्षिणाग्नि, अग्नियों के इन नामों को जानता हुआ उन २ सब कर्मों को करे। (मारुतनामानमग्निंस्थापयामि) ऐसे २ वाक्य बोलकर उस २ गर्भाधानादि कर्म में उस अग्नि को स्थापित करके होम करे। आगे गर्भाधानादि प्रधान कर्मों के वौधायानोक्त पृथक् २ देवता होते हैं। उस २ कर्म सम्बन्धी स्वस्ति पुण्याहवाचन के प्रारम्भ में (ब्रह्मा प्रीयताम्) इत्यादि प्रकार उस २ देवता को प्रसन्नता का निवेदन करे। विवाह संस्कार का

अग्नि देवता है इस से विवाह के पुण्याहवाचन में (अग्निः प्रीयताम्) कहे। औपासन होम के अग्नि सूर्य और प्रजापति ये तीन देवता हैं। स्थालीपाक कर्म का अग्निगर्भ, गर्भाधान का ब्रह्मा, पुंसवन का प्रजापति, सीमन्तोन्नयन का धाता, जातकर्म में सविता, नामकरण में प्रजापति, निष्क्रमण और अन्न प्राशन में सविता, चूड़ाकर्म और केशान्त में प्रजापति, उपनयन में इन्द्र, वेदारम्भ में अपावक, पवित्रकर्म में श्रद्धा, उत्सर्ग में सुश्रवा, उपाकर्म में सविता और विवाह में प्रजापति देवता है।

विवाह में अग्निरूप प्रजापति देवता जानो। गर्भाधानादि के अंग स्वरूप नान्दी श्राद्ध में ऋतुदक्ष नामक विश्वेदेव, अन्यत्र सत्यवसु नामक विश्वेदेव, देवता जानो। सब कर्मों के आरम्भ में त्रिमात्र प्लुत ओंकार बोलना चाहिए। स्नान द्वारा शुद्ध हुआ मनुष्य देव और पितृकर्म तथा जप वा दानादि कर्म का अधिकारी होता है। सम्यक् स्नान आचमन संध्या करके काम क्रोध पाखण्डादि से रहित सत्यवादी जितेन्द्रिय मनुष्य सब कर्मों में प्रशस्त माना जाता है। देवता और पितृकर्म करने के लिए शिर सहित स्नान करे और माङ्गलिक कर्मों में मनुष्य अपने घर आकर सर्वौषधी और सर्वगन्ध के चूर्ण युक्त तिल और आमलों को पीस मिला के प्रथम उबटन कर चमेली आदि का सुगन्ध तैल शरीर में लगाके कर्मठ ब्राह्मणों के साथ मंगल स्नान करें। स्नान के पश्चात् शुष्क वस्त्र धारण करके जलाशय के भीतर तथा स्नानानन्तर गीले वस्त्र धारण कर स्थल में सन्ध्या जप होमादि कर्म न करें क्योंकि वैसा काम निष्फल माना जाता है। नील से रंगे वस्त्र धारण करके जो कुछ काम किया जाता है वह राक्षसों को प्राप्त होता वा निष्फल हो जाता है। होम आचमन संध्या स्वस्तिवाचन और देव पूजादि कार्यों को एक वस्त्र से न करे। नाभि पर तथा नाभि वाम भाग में और एक पृष्ठ भाग में इस प्रकार धोती की तीन काँछें लगाने से ब्राह्मण कर्म के योग्य शुद्ध माना है। कटि भाग में लपेटने का, शौच जाने का, मूत्र और मैथुन जिस वस्त्र को धारण करके किया हो ऐसे वस्त्रों को धर्मकर्म करने में धारण न करें। श्रौत स्मार्त्त कर्म करने में

दो यज्ञोपवीत धारण करने चाहिएं और अंगोछा वस्त्र न हो तो तृतीय यज्ञोपवीत उसके स्थान में धारण करें। यदि खल्वाटत्व [गंजापन] आदि दोष से मनुष्य के शिर पर शिखा न हो तो ब्रह्मग्रन्थि सहित कुश की शिखा धारण कर लेवे। जो ब्राह्मण दम्भ रहित होकर हाथ में कुश लिए ही सदा कर्म करता है वह अग्निके तुल्य पापों को नष्ट करता है। आवाहन, आसन, पाद्य, अर्घ, आचमनीय, स्नान, वस्त्र, यज्ञोपवीत, गन्ध, माल्य, धूप, दीप, नैवेद्य, ताम्बूल, प्रदक्षिणा, और पुष्पाञ्जलि ये देवपूजन के षोडशोपचार कहलाते हैं। इन्हीं षोडश प्रकारों से देवादि का पूजन किया जाता है। तदनन्तर सुफलता की प्रार्थना और देवता को दक्षिणा समर्पण करे। गन्ध, पुष्प, धूप दीप, और नैवेद्य इन पांचों के द्वारा होने वाला पूजन पञ्चोपचार कहाता है। गर्भाधान संस्कारों में कर्माङ्ग पूर्त्यर्थ दश २ ब्राह्मणों को भोजन करावें, उपनयन में पचास और विवाह संस्कार में सौ ब्राह्मण जिमाने चाहिएं। आवसथ्याधान में तैंतीस और श्रौताधान संस्कार में सौ से भी अधिक ब्राह्मणों को जिमावे। आग्रयण नाम नवान्नेष्टि में दश और प्रायश्चित में पांच ब्राह्मणों को भोजन करावे। अथवा कम से कम उस २ संस्कार की सिद्धि के लिए आठ ब्राह्मणों को भक्ति से भोजन करावे। एक सहस्र व्याहृति द्वारा होम कराने पर याजक ब्राह्मण को एक माशा सुवर्ण दक्षिणा, लाख आहुति के होम में एक शत जौ भर दक्षिणा, साधारण यजमान मनुष्य देवे। धनी इससे द्विगुण और महाधनी त्रिगुण दक्षिणा देवे, और दरिद्र मनुष्य आधा जौ भर सुवर्ण दक्षिणा देवे। और महा दरिद्र हो तो दरिद्र से भी आधी दक्षिणा देवे। विवाहादि कर्मों में याजक ब्राह्मण को यजमान योग्यतानुसार दक्षिणा देवे। साधारण कोटि का यजमान ५) से कम दक्षिणा विवाहादि बड़े कर्म में न देवे। यदि अच्छा श्रीमान् होकर साधारण के तुल्य कम दक्षिणा देवे तो श्रुति स्मृति के मतानुसार कर्म का फल उसको नहीं मिलता। धन होने पर भी जो दान दक्षिणा के समय कंजूसी करता है वह एक प्रकार का चोर है उसको शुभफल कुछ नहीं होता। वेद और उपनिषदादि ग्रन्थों में सब कर्मों की

# पंचाङ्गपद्धति ॥

सर्वशुभकर्मण आदौ विशेषेणोपनयनविवाहावसथ्याधानारम्भे सोमयागादियज्ञारम्भे च महत्कर्मसु पूर्वदिनेऽल्पकर्मसु च तस्मिन्नेव दिने पञ्चाङ्गानुष्ठानं कुर्यात् तद्यथा—कृतमङ्गलस्नानः

---

दक्षिणा भूमि, गौ, वस्त्र और सुवर्ण कहे हैं। रुद्र के चक्षु से प्रकट होने के कारण चांदी की दक्षिणा अमंगल सूचक होने से देव कार्यों में विशेष कर वर्जित है। यदि कोई मनुष्य रुपयादि धन ही दक्षिणा में देना चाहे तो गो मूल्य रूप से कल्पना करके देना चाहिए तब अमंगलता सूचक दोष नहीं माना जायेगा। नित्य नैमित्तिक काम्य और मोक्ष साधन कर्मों की समाप्ति में विष्णुभगवान् को कर्म का समर्पण करना चाहिए। इसमें जो प्रमाण हमने लिखे हैं। वे प्रायः संस्कार भास्कर आदि अनेक ग्रन्थों से लिखे हैं।

**इति संस्कार प्रस्तावः समाप्तः ॥**

❀❀❀❀

अब यहां पञ्चाङ्ग पद्धति का प्रयोग लिखते हैं--सब शुभ कर्मों के आदि में और विशेष कर उपनयन विवाहादि अवसथ्याधान श्रौताधान और अग्निष्टोमादि सोमयागों के आरम्भ में यह पञ्चाङ्ग पद्धति का विनियोग बड़े कर्मों में पहिले दिन तथा छोटे कर्मों में उसी दिन करे। सुगन्धित उष्ण जल से स्नानकर अच्छे अलंकारों से युक्त यजमान आचमन किये पश्चात् माङ्गलिक तिलक लगाके वस्त्र से ढाँपी यज्ञार्ह काष्ठ की चौकीपर पूर्वाभिमुख बैठकर पत्नी को अपने से दाहिनी ओर पूर्वाभिमुखी आसन पर बैठावे पत्नी से दक्षिण में संस्कार्य बालक को बैठावे चार ब्राह्मणों वेदपाठियों को उत्तराभिमुख बैठा के ऋत्विग्यजमान सब (आनोभद्रा०) शान्ति सूक्त का जप करें तब ईश्वर तथा परमर्षि आदि को नमस्कार करें।

स्वलङ्कृतः कृताचमनः प्राङ्मुखो धृतमङ्गलतिलको यजमानो वसनाच्छादित यज्ञियकाष्ठपीठ उपविश्य पत्नीं च स्वदक्षिणतः प्राङ्मुखीमुपवेश्य संस्कार्यंच तथैवोपवेश्य—ब्राह्मणैः सह आनोभद्रइत्यादिशान्ति पाठं पाठं जपेत् ।

---

# अथ शान्तिपाठमन्त्राः ।

ओं-आनोभद्राःक्रतवोयन्तुविश्वतोऽदब्धासोअपरतासऽउद्भिदः । देवानोयथासदमिद्वृधे असन्नप्रायुवोरक्षितारो दिवेदिवे ।। 1 ।। देवानाम्भद्रासुमतिर्ऋजूयतां देवाना ँ रातिरभिनो निवर्तताम् । देवाना ँ सख्यमुपसेदिमावयं देवानऽआयुःप्रतिरन्तुजोबसे ।। 2 ।। तान्पूर्वयानिविदाहूमहेवयं भगम्मित्रमदितिन्दक्षमस्रिधम् । अर्य्यमणंवरुण ँ सोममश्विना सरस्वतीनःसुभगामयस्करत् ।। 3 ।। तन्नोवातोमयोभुवातुभेषजं तन्मातापृथिवीतत्पिताद्यौः । तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवम् ।। 4 ।। तमीशानंजगतस्तस्थुषस्पतिं धियंजिन्वमवसेहूमहेवयम् । पूषानोयथावेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ।। 4 ।। स्वस्तिनइन्द्रोवृद्धश्रवाः स्वस्तिन. पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ।। 6 ।। पृषदश्वामरुतः पृश्निमातरः शुभंयावानोविदथेषुजग्मयः । अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ।। 7 ।। भद्रंकर्णेभिः-

शृणुयामदेवा भद्रम्पश्येमाक्षभिर्यजत्रा: । स्थिरैरङ्गैस्तुष्टुवा-ँ सस्तनूभिर्व्यशेमहिदेवहितंयदायु: ।। 8 ।। शतमिन्नुशरदो-अन्तिदेवा यत्रानश्चक्राजरसन्तनूनाम् । पुत्रासोयत्रपित-रोभवन्ति मानोमध्यारीरिषतायुर्गन्तो: ।। 9 । अदितिर्द्यौर-दितिरन्तरिक्ष मदितिर्मातासपितासपुत्र: । विश्वेदेवाऽअदिति: पञ्चजना-ऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ।। 10 ।। तम्पत्नी-भिरनुगच्छेमदेवा: पुत्रैर्भ्रातृभिरुतत्राहिरण्यै: । नाकंगृभ्णाना: सुकृतस्यलोके तृतीयेपृष्ठेऽअधिरोचनेदिव: ।। 11 ।। आयु-ष्यवर्च्चस्यँ रायस्पोषमौद्भिदम् । इदँ हिरण्यंवर्च्चस्व-ज्जैत्रायाविशतादुमोम् ।। 12 ।। द्यौ: शान्तिरन्तरिक्षँ-शान्ति: पृथिवीशान्तिराप: शान्तिरोषधय:शान्ति: । वनस्पतय: शान्तिर्व्विश्वेदेवा: शान्तिर्ब्रह्मशान्ति: सर्व्वँ-शान्ति: शान्तिरेवशान्ति: सामाशान्तिरेधि ।। 13 ।। यतोयत:-समीहसे ततोनोऽअभयकुरु । शन्न: कुरुप्रजाभ्योऽअभयन्न: पशुभ्य: ।। 14 ।। ओंसुशान्तिर्भवतु ।।

ओ३म्सच्चिदानन्दाय ब्रह्मणे नम: । ओं परमर्षिभ्योनम: । ओंश्रीमन्महागणाधिपतये नम: । ओंलक्ष्मीनारायणाभ्यांनम: । ओं उमामहेश्वराभ्यां नम: । ओं वाणीहिरण्यगर्भाभ्यां नम: । ओं शचीपुरन्दराभ्यां नम: । ओं मातापितृचरणकमलेभ्योनम: । ओंकुलदेवताभ्योनम: । ओं—इष्टदेवताभ्यो नम: । ओंग्रामदेव-ताभ्यो नम: । ओं स्थानदेवताभ्यो नम: । ओंवास्तुदेवताभ्यो नम: । ओंसर्वेभ्यो देवेभ्यो नम: । ओं पितृभ्यो नम: । ओं सर्वेभ्यो-ब्राह्मणेभ्योनमोनम: । ओं पुण्यं पुण्याहं दीर्घमायुरस्तु ।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ 1 ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यःपठेच्छृणुयादपि ॥ 2 ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ 3 ॥
शुक्लांवर धरं देवं शशिवर्णं चतुर्भुजम्
प्रसन्नवदनं ध्यायेत्सर्व विघ्नोपशांतये ॥ 4 ॥
अभीप्सितार्थसिद्धयर्थं पूजितो यः सुरासुरैः ।
सर्वबिघ्नहरस्तस्मै गणाधिपतये नमः ॥ 5 ॥
सर्वमंगलमांगल्ये शिवेसर्वार्थसाधिके ।
शरण्ये त्र्यंवके गौरि नारायणि नमोऽस्तु ते ॥ 6 ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ।
येषां हृदिस्थो भगवान्मंगलायतनं हरिः ॥ 7 ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषा मिन्दीबरश्यामो हृदयस्थो जनार्दनः ॥ 8 ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान्
सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ 9 ॥
सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशंतु नःसिद्धिं ब्रह्मेशानजनार्दनाः ॥ 10 ॥

ओं—विष्णु विष्णुर्विष्णुः श्रीमद्‌भगवतो महापुरुषस्य विष्णो-राज्ञया प्रवर्तमानस्याद्यब्रह्मणो द्वितीये परार्धे विष्णुपदे श्रीश्वेत वाराहकल्पे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे कलिप्रथम चरणे भारतवर्षे भरतखंडे जम्बूद्वीपे परशुरामक्षेत्रे बौद्धावतारे

---

श्रीगणेशजी आदि देवताओं को नमस्कार करके ब्राह्मण पर्यन्त मान्य पुरुषों को प्रणाम करे । तदनन्तर (सुमुखश्चैक०) इत्यादि दश श्लोकों

अमुकनामसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभ पुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलावाप्तये अस्मिन्पुण्याहे अस्याः मम भार्यायाः प्रथमरजोदर्शनसमये मासतिथिवार नक्षत्रयोगकरणलग्नहोरावस्त्र दर्शनस्थानदिनभागवर्णानां मध्ये यद्विरुद्धफलं तत्तद्दोषपरिहारार्थं पुत्रपौत्रादिसंततिप्राप्त्यर्थं तथा च मम कलत्रेण सह जन्मराशेः सकाशान्नामराशेः सकाशाद्ये केचिद्विरुद्धस्थानस्थितक्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितग्रहाणां शुभ फलप्राप्त्यर्थं गणपतिवुर्गाक्षेत्राधिपत्यादित्यादिनवग्रहाधिदेवताप्रत्यधिदेवतादिसहितश्री सूर्येन्द्रेन्द्राणीं भुवनेश्वरीदेवताप्रीत्यर्थं तथाच अस्याः मम भार्यायाः क्षेत्रगर्भयोः संस्कारार्थं प्रतिगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानाख्यंकर्म एकतंत्रेणाहं करिष्ये ॥ इतिसंकल्पः ॥ तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनमायुष्यमंत्रजपं नान्दीश्राद्धं यथाप्राप्त मन्यत्कलशस्थापनादिकं चाहं करिष्ये । तत्रादौ कर्मार्थं जलपूरितकलशार्चनम् ।

---

द्वारा गणपत्यादि देवों की स्तुति करे । फिर (ओंविष्णु०) इत्यादि संकल्प वाक्य सब गर्भाधानादि संस्कारों में पढ़ना चाहिये, अमुक शब्द के स्थान में उस २ संवत्सरादि का नाम बोले कि जो उस संस्कार के समय होवे (अस्या मम भार्याया०) इत्यादि वाक्य गर्भाधान पुंसवन तथा सीमन्तोनयन संस्कार में बोला जावेगा, अन्य जातकर्मादि के अनुकूल भिन्न-भिन्न पद

ॐ तत्वायामिब्रह्मणाऽवन्दमानस्तदाशास्तेयजमानोह-
विर्भिः । अहेडमानोब्वरुणेहृबोध्युरुश७ समानऽआयुःप्रमोषीः ।
कलशे वरुणाय नमः गंधाक्षतपुष्पैः संपूज्य ॥ ततोदक्षिणह-
स्तेन कलशमालभ्याभिमंत्रयेत् । कलशस्य मुखे विष्णुः कंठे रुद्रः स-
माश्रिता ॥ मूलेतस्यस्थितोब्रह्मा मध्येमातृगणाः स्मृताः ॥ 1 ॥
कुक्षौतु सागराःसर्वे सप्तद्वीपावसुंधरा ॥ ऋग्वेदोऽथयजुर्वेदः सामवेदो
ह्यथर्वणः ॥ 2 ॥ अंगैश्चसहिताःसर्वे कलशेतुसमाश्रिताः ॥ इत्यभि-
मंत्र्य ॥ ततोगंगाद्यावाहनम् ॥ गंगेचयमुनेचैव गोदावरिसरस्वति ।
नर्मदेसिन्धुकावेरिजलेऽस्मिन्सन्निधिंकुरु ॥ 3 ॥ अस्मिन्कलशेसर्वा-
णितीर्थान्यावाहयामि० । पूजयामि । नमस्करोमि । कलशोदकेन
पूजासभारान्संप्रोक्षयेत् तत्र मंत्र :—

ॐ अपवित्रः पवित्रो वा सर्वावस्थांगतोपि वा ।
यःस्मरेत्पुण्डरीकाक्षं स बाह्याभ्यंतरः शुचिः ॥

इति मंत्रेंण प्रोक्षयेत । दीपपूजनम् ।
भो दीप त्वं ब्रह्मरूप अंधकार निवारक ।
इमां मया कृतां पूजां गृह्णंस्तेजः प्रवर्धय ॥

---

बदँलने चाहिये। पहिले कर्मसिद्धि के लिए जल से भरे एक मिट्टी तांवा आदि के कलश का पूजन करे। प्रथम (तत्त्वायामि०) मन्त्र से कलश पर वरुण देवता को नमस्कार करके गन्ध तथा अक्षतों द्वारा कलश का पूजन कर दाहिने हाथ की अनामिका अंगुलि से कलश का स्पर्श करता हुआ (कलशस्य०) इत्यादि श्लोकों से अभिमन्त्रण करें। तदनन्तर कलश में गंगादि नदियों का आवाहन करके कहे कि इस कलश में सब तीर्थों को

ॐदीपाय नमः गंधाक्षतपुष्पैः संपूजयेत् ।। अथ गणपति-पूजनम् ।। यद्यपि गणपतिपूजनं गदाधरादिभिर्नोक्तं तथापि आदौ विनायकःपूज्य अंतेतुकुलदेवतेति संस्कारमयूखादौ गृह्यपरिशिष्टादिवचनात् तत्कर्त्तव्यमेवास्तिकैः ।

ओंगणानान्त्वागणपति ँ हवामहेप्रियाणान्त्वा प्रियपति ँ हवामहे निधीनान्त्वानिधिपति ँ हवामहे व्वसोमम । आहमजानिगर्भधमात्वमजासिगर्भधम् ।।

ओंभूर्भुवःस्वःसिद्धिबुद्धिसहितमहागणपतये नमः गणपतिमावाहयामि ।।

रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।<br>आसनं च मया दत्तं गृहाण परमेश्वर ।।

ॐ वर्ष्मोस्मिसमानानामुद्यतामिवसूर्यः ।<br>इमन्तमभितिष्ठामि योमाकश्चाभिदासति ।।

ओंभू० सिद्धिबुद्धिसहितमहागणाधिपतयेनमः । आसनं समर्पयामि ।।

उष्णोदकं निर्मलंच सर्वसौगंध्यसंयुतम् ।<br>पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ।।

---

आवाहन और नमस्कारादि द्वारा पूजन करता हूँ। तब कलश के जल से गणेश पूजादि के सब सामान का प्रोक्षण (अपवित्रः०) मन्त्र से करे। तदनन्तर जलाये हुए घृत के दीपक का गन्धाक्षत पुष्पों द्वारा (दीपाय नमः) द्वारा पूजन और दीप से प्रार्थना करे ॥

इसके पश्चात् गणेश जी का ध्यान, आवाहन, आसन, पाद्य अर्घ्य आचमन

ॐ एतावानस्य महिमातो ज्यायांश्चपूरुषः ।
पादोस्यव्विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥

ओंभू० सि० महागणाधिपतयेनमः । पाद्यं समर्पयामि ।
ताम्रपात्रेस्थितं तोयं गंधपुष्पफलान्वितम् ।
सहिरण्यंददाम्यर्घं गृहाणपरमेश्वर ॥

ॐ धामन्तेव्विश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्य—
न्तरायुषि अपामिनीकेसमिथेयऽआभृतस्तमश्याम—
मधुमन्तन्तऽऊर्मिम् ॥

ओंभू० सि० म० अर्घ्यं स० ।
सर्वतीर्थसमायुक्तं सुगन्धिनिर्मलंजलम् ।
आचम्यार्घ्यंमयादत्तं गृहाणपरमेश्वर ॥

ॐ इमम्मेव्वरुणश्रुधीहवमद्याचमृडय । त्वामवस्युराचके ॥

ओं भू० सि० म० आचमनं स० ॥ पंचामृतस्नानम्—
कामधेनुसमुद्भूतं सर्वेषांजीवनंपरम् ।
पावनंयज्ञहेतुश्च पयःस्नानार्थमर्पितम् ॥

ॐ पयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्त—
रिक्षेपयोधाः । पयस्वतीःप्रदिशः सन्तु मह्यम् ॥

ओं भू० सि० म० पयःस्नानं स० ॥ पयःस्नानांते शुद्धोदक-
स्नानं समर्पयामि ॥

पयसस्तुसमुद्भूतं मधुराम्लंशशिप्रभम् ।
दध्यानीतंमयादेव स्नानार्थंप्रतिगृह्यताम् ॥

---

पञ्चामृत स्नान पयःस्नान, शुद्धोदकस्नान, दधिस्नान, घृतस्नान, शुद्धोदक

ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः ।
सुरभिनोमुखाकरत्प्रणऽआयूँषितारिषत् ॥

ओं भू० सि० म० दधिस्नानं स० ।

नवनीतिसमुत्पन्नं सर्वसंतोषकारकम् ।।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।

ॐ घृतम्मिमिक्षेघृतनस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥
अनुष्वधमाबहमादयस्वस्बाहाकृतंवृषभव्वक्षिहव्यम् ॥

ओं० भू० सि० म० घृतस्नानांतेशुद्धोदकस्नानं समर्पयामि ।

तरुपुष्पसमुद्भूतं सुस्वादुमधुरंमधु ।
तेजःपुष्टिकरंदिव्यं स्नानार्थंप्रतिगृह्यताम् ।।

ॐ मधुव्वाताऽऋतायतेमधुक्षरन्तसिन्धवः ॥ माध्वीर्न्नः-
सन्त्वोषधीः ॥ 1 ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवँरजः ॥
मधुद्यौरस्तुनःपिता ।। 2 ॥ मधुमान्नोव्वनस्पतिर्म्मधुमां 2
अस्तुसूर्यः । माध्वीर्गावोभवन्तुनः ॥ 3 ॥

ओं० भूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणाधिपतयेनमः ।
मधुस्नानं समर्पयामि ।।

इक्षुसारसमुद्भूता शर्करापुष्टिकारिका ।
मलापहारिकादिव्या स्नानार्थंप्रतिगृह्यताम् ।।

ॐ अपाँरसमुद्वयसँसूर्येसन्तँसमाहितम् ।।

---

स्नान, मधुस्नान, शर्करास्नान, उद्वर्त्तनस्नान, शुद्धोदकस्नान तदनन्तर

अपा ᳪ रसस्ययोरसस्तंवन्त्रोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रा-यत्वा । जुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वा जुष्टतमम् ॥

ओं॰ भू॰ सि॰ म॰ शर्करास्नानं समर्पयामि ।

नानासुगन्धद्रव्यं च चंदनं रजनीयुतम् ।

उद्वर्तनं मया दत्तं गृहाण परमेश्वर ॥

ॐ गन्धर्व्वस्त्वाव्विश्वावन्वसु:परिदधातुव्विश्वस्यारिष्ट-यैयजमानस्यपरिधिरस्यग्निरिडऽईडित: ॥

ॐ अहिरिवभोगै:पर्येतिबाहुञ्ज्यायाहेतिम्परिवाधमान: ॥ हस्तघ्नोव्विश्वव्वयुनानिव्विद्वान्पुमान्पुमा ᳪ सम्परिपातु विश्वत. ॥

ओं भू॰ सि॰ उद्वर्तनस्नानं सम॰ ॥ उद्वर्तनस्नानांते शुद्धोदकस्नानं समर्पयामि ॥ ततो नाम मंत्रेण गन्धपुष्पधूपदीप-नैवेद्यताम्बूलदक्षिणांत पंचामृतस्नानांगपूजनमिति शिष्टा: ॥

कावेरीनर्मदावेणी तुङ्गभद्रासरस्वती ॥

गंगाचयमुनातोयं मयास्नानार्थमर्पितम् ॥

ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन ।

महेरणायचक्षसे । यो व: शिवतमोरस-

स्तस्यभाजयेतहन: । उशतीरिवमातर: ।

तस्माऽअरङ्गमामवो यस्यक्षयायजिन्वथ ॥

आपोजनयथाचन ॥

---

गन्ध पुष्पादि द्वारा शिष्टाचार से पञ्चामृत स्नानाङ्ग पूजन करे स्नानान्त आचमन, वस्त्र, यज्ञोपवीत आचमन, चन्दन, अक्षत, पुष्प नाना परिमल

ओंभूर्भुवःस्वःसिद्धिबुद्धिसहितमहागणाधिपतयेनमः । शुद्धोदकस्नानमभिषेकंचसमर्पयामि ।। ओंशांतिः शांतिः शांतिः ।। सुशांतिर्भवतु ।। ओंभू० सि० म० स्नानांते आचमनं समर्पयामि ।।

सर्वभूषादिमे सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ।।

ॐ युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवतिजायमानः ।। तंधीरासःकवयऽउन्नयन्ति. स्वाध्योमनसादेवयन्तः ।।

ओं भू० सि० म० वस्त्रं स० ।।

नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं मयादत्तं गृहाणपरमेश्वर ।।

ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्रयम्प्रति मुञ्चशुभ्रं यज्ञोपवीतम्बलमस्तुतेजः ।।

ओं भू० सि० म० यज्ञोपवीतंस० आचमनम् ।।

श्रीखंड चंदनं दिव्यं केशरादिसमन्वितम् ।
विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्यताम् ।।

ॐ त्वाङ्गन्धर्व्वाऽअखनंस्त्वामिन्द्रस्त्वांबृहस्पतिः ।। त्वामोषधेसोमोराजाव्विद्वान्यक्ष्मादमुच्यत ।।

ओं भूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणाधिपतयेनमः । चन्दनं समर्पयामि ।।

---

द्रव्य, धूप, दीप, नैवेद्य, पानीय उत्तरापोशन, हस्त प्रक्षालन, मुख प्रक्षालन,

अक्षताश्चसुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः ।
मयानिवेदिताभक्त्या गृहाणपरमेश्वर ॥

ॐ अक्षन्नमीमदन्त ह्यवप्प्रियाऽअधूषत ॥ अस्तोष-
तस्वभानवो बिप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ।

ओं भू० सि० म० अक्षतान्स० ॥

सुमाल्यानिसुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥

ओंओषधीः प्रतिमोदध्वम्पुष्पवतीः प्रसूवरीः ।
अश्वाऽइवसजित्वरीर्व्वीरुधःपारयिष्णबः ॥

ओं भू० सि० म० पुष्पाणि समर्पयामि ॥

दूर्वाङ्कुरान्सुहरितानमृतान्मंगलप्रदान् ।
आनीतांस्तवपूजार्थं गृहाण गणनायक ॥

ओं काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥
एवानोदूर्वेप्रतिनुसहस्रेणशतेनच ॥

ओं भू० सि० म० दूर्वाङ्कुरान्स० ।

हरिद्राकुंकुमं चैव सिन्दूरादिसमन्वितम् ।
सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वर ॥

सुगंधौषधिचूर्णं च नानापरिमलानि च ।
नानासुगंधतैलानि अतः शान्तिं प्रयच्छ मे ॥

---

चन्दन से करोद्वर्त्तन, फल ताम्बूल दक्षिणा आर्त्ति पुष्पाञ्जली प्रदक्षिणा

ॐ अहिरिवभोगैः पर्य्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोव्विश्वाव्वयुनानिव्विद्वान्पुमान्पुमाᳫं सम्परिपातुव्विश्वतः ॥

ओं भू० सि० नानापरिमलद्रव्याणि समर्पयामि ॥

वनस्पतिरसोद्भूतो गन्धाढ्योगन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

ॐ धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतञ्योस्मान्धूर्व्वतितन्धूर्व्वयम्व्वयन्धूर्व्वामः॥ देवानामसिव्वह्नितमᳫंसस्नितमम्पप्प्रितमञ्जुष्टतमन्देवहूतमम् ॥

ओं भू० सि० म० धूपं स० ॥

साज्यं च वर्तिसंयुक्तं वन्हिना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥

ॐ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहा सूर्य्योज्योतिर्ज्योतिः सूर्यःस्वाहा । सूर्योवर्च्चोज्योतिर्व्वर्च्चः स्वाहा । ज्योतिःसूर्यःसूर्योज्योतिःस्वाहा ॥

ओं भू० सि० म० दीपं समर्पयामि ॥

शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ।
उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

ॐ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ । अप्सुक्षितोमहिनैकादशस्थ ते देवासोयज्ञमिमंजुषध्वम् ॥

और विशेषार्घ इन सब आसनादि के समर्पण द्वारा संस्कृत में लिखे

ओं भू० सि० नैवेद्यंस० मध्येपानीयंस० ।। ओं भू० उत्तरा-पोशनं स० ।। ओं भू० हस्तप्रक्षालनं समर्पयामि ।। ओं भू० सि० म० मुखप्रक्षालनं स० ।। ओं भू० चंदनेन करोद्वर्तनं स० ।।

इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ।।

ॐ याफलिनीर्याऽफलाऽअपुष्पायाश्च पुष्पिणीः ।। बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वꣳ हसः ।।

ओं भू० सि० म० फलं स० ।।

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
एलादिचूर्णसंयुक्तं ताम्बूलंप्रतिगृह्यताम् ।।

ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वतव्वसन्तोस्यासीदाज्यं ग्रीष्मऽइध्मःशरद्धविः ।।

ओं भू० सि० म० ताम्बूलं स० ।।

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिप्रयच्छ मे ।।

ॐ हिरण्यगर्भःसमवर्त्तताग्रे भूतस्यजातःपतिरेकऽआसीत् ।। सदाधारपृथिवीन्द्यामुतेमांकस्मैदेवायहविषाव्विधेम ।।

ओं भू० सि० दक्षिणा स० ।

कदलीगर्भसंभूतं—कर्पूरं च प्रदीपितम् ?
आरार्तिकमहं कुर्वे पश्य मे वरदो भव ।।

ॐ इदꣳ हविःप्प्रजननम्मेऽअस्तु दशवीरꣳसर्व्वगणꣳ-

स्वस्तये । आत्मसनिप्रजासनि पशुसनि लोकसन्यभयसनि ।
अग्निःप्रजाम्बहुलाम्मेकरोत्वन्नम्पयोरेतोऽअस्मासुधत्त ॥

ओं भू० सि० म० कर्पूरनीराजनं स० ।

नानासुगंधपुष्पाणि यथाकालोद्भवानि च ।
पुष्पांजलिर्मयादत्ता गृहाण परमेश्वर ॥

ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥
तेहनाकम्महिमानःसचन्त यत्रपूर्वेसाध्याःसन्तिदेवाः ॥

ओं भू० सि० म० पुष्पांजलिं स० ।

यानि कानि च पापानि ज्ञाताज्ञातकृतानि च ।
तानि सर्वाणि नश्यन्ति प्रदक्षिणपदे पदे ॥

ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥
देवायद्यज्ञन्तन्वानाऽअवध्नन्पुरुषम्पशुम् ॥ 1 ॥

ओं भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणाधिपतयेनमः ।
प्रदक्षिणां समर्पयामि ॥ अथ विशेषार्घः ॥

रक्षरक्षगणाध्यक्ष रक्षत्रैलोक्यरक्षक ।
भक्तानामभयंकर्त्ता त्राताभवभवार्णवात् ॥
द्वैमातुरकृपासिन्धो षाण्मातुराग्रजप्रभो ।
वरद त्वं वरं देहि वांछितं वांछितार्थद ॥
अनेनसफलार्घ्येण फलदोऽस्तु सदा मम ॥

ओं भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणाधिपतयेनमः ।
विशेषार्घं समर्पयामि ॥

## प्रार्थना

विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलायजगद्धिताय । नागाननायश्रुतियज्ञविभूषिताय गौरीसुतायगणनाथनमोनमस्ते ॥१॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदायसुरेश्वराय ॥ विद्यधरायविकटायचवामनाय भक्तप्रसन्नवरदायनमोनमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करि-रूपाय ते नमः ॥ ३ ॥ विश्वरूपस्वरूपाय नमस्तेब्रह्मचारिणे ॥ भक्त प्रियाय देवाय नमस्तुभ्यं विनायक ॥ ४ ॥ लम्बोदरनमस्तुभ्यं सततंमोदकप्रिय ॥ निर्विघ्नंकुरुमेदेव सर्वकार्येषुसर्वदा ॥ ५ ॥ त्वां विघ्नशत्रुदलनेतिचसुंदरेति भक्तप्रियेतिसुखदेतिवरप्रदेति । विद्या-प्रदेत्यघहरेतिचयेस्तुवंति तेभ्योगणेशवरदोभवनित्यमेव ॥ अनया-पूजया सिद्धिबुद्धिसहितमहागणपतिः सांगः सपरिवारः प्रियताम् ॥ इति श्रीगणपतिपूजनं समाप्तम् ॥

*******

### अथ पुण्याहवाचन प्रयोगः ॥

पुण्याहवाचनेऽग्नणः शुद्धकलशो ग्राह्यः महीद्यौरिति भूमिंस्पृशेत ।

---

अनुसार विधि पूर्वक श्रद्धा के साथ गणेशजी का षोडशोपचार पूजन कर के (विघ्नेश्वराय) आदि श्लोकों द्वारा गणेशजी की स्तुति प्रार्थना करे ।

तदनन्तर स्वस्ति पुण्याहवाचन का आरम्भ करे । कर्म के आदि में स्वस्तिपुण्याहवाचन करना उचित है । गन्ध ताम्बूल दक्षिणादि से पूजित चार ब्राह्मण हाथ में कुश लेकर बैठें यदि यजमान ब्राह्मणों से दक्षिण में बैठे तो उत्तराभिमुख बैठे तब ब्राह्मण लोग पूर्वाभिमुख बैठें वा ब्राह्मण लोग उत्तराभिमुख बैठें तो यजमान पत्नी सहित पूर्वाभिमुख बैठे । यजमान घुटने भूमि में गिरा के खिले कमलवत् दोनों हाथ शिर पर कर लेवे ।

अब पुण्याहवाचन विधि दिखाते हैं । इस स्वस्तिपुण्याहवाचन

ॐ महीद्यौःपृथिवीचन—इमंयज्ञंमिमिक्षताम् । पिपृतां नो भरीमभिः ॥

ओषधयःसमितितण्डुलपुञ्जं कुर्यात्—

ओमोषधयःसमवदन्तसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥

तत आजिघ्रकलशमिति पुञ्जोपरि सलक्षणं धातुमयं मृन्मयं वा कलशं निदध्यात् ।

ओमाजिघ्रकलशंह्यात्वाविशन्त्विन्दवः । पुनरूर्जानिवर्त्तस्वसानः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ॥

इमंमेवरुणेति पवित्रजलेन कलशं पूरयेत्—

ओमिमंमेवरुणश्रुधी हवमद्याचमृडय । त्वामवस्युराचके ॥

गन्धद्वारामिति कलशे गन्धं क्षिपेत्—

ॐ—गन्धद्वारां दुराधर्षां नित्यपुष्टांकरीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियम् ॥

---

में छिद्र रहित दर्शनीय शुद्ध एक कलश लेना चाहिये । प्रथम (महीद्यौः०) मन्त्र पढ़ के कलश रखने की भूमि का स्पर्श कर के (ओमोषधय) मन्त्र पढ़ के चावलों की एक ढेरी करे । तदनन्तर (आजिघ्रकलशं०) मन्त्र से चावलों की ढेरी पर, रोली आदि जिसमें लगाये हों ऐसे सोने चांदी पीतलादि के वा मिट्टी के कलश को रख के उसमें (इमंमेवरुण०) मन्त्र से पवित्र जल डालें (गन्धद्वारां०) से उस कलश में सुगन्धित खस आदि वस्तु डालकर कलश पर चन्दनादि का लेपन करके (याओषधीः०) मन्त्र से सर्वौषधि

चन्दनादि तमनुलिप्य या ओषधीरिति सर्वौषधीः क्षिपेत् ॥

ॐ या ओषधीः पूर्वाजाता देवेभ्यस्त्रियुगंपुरा ।
मनैनुबभ्रुणामहॅं शतं धामानिसप्तच ॥

तत ओषधयःसमिति पूर्वोक्तमन्त्रेणकलशे यवान् क्षिप्त्वा काण्डात्कांडादिति दूर्वाः क्षिपेत्—

ॐ काण्डात्काण्डातप्ररोहन्ती परुषःपरुषस्परि ।
एवानोदूर्वे प्रतनु सहस्रेणशतेन च ॥

अश्वत्थेवइति पञ्चपल्लवान्—

ओमश्वत्थेवोनिषदनं पर्णेवोवसतिष्कृता ।
गोभाजइत्किलासथ यत्सनवथपूरुषम् ॥

स्योनापृथिवीतिसप्तमृदः क्षिपेत्—

ॐ स्योनापृथिविनोभवा नृक्षरानिवेशनी । यच्छानः शर्मसप्रथाः ।

याःफलिनीरिति फलानि—

---

कलश में डाले । फिर (ओषधयःसं) इस से पूर्व पृष्ठ में लिखे मन्त्र से उसमें जौ डालकर (काण्डात्काण्डात्०) से कलश में दूब गिरावे (अश्वत्थेव०) से आम आदि पांच वृक्षों के पत्ते कलश में धर कर (स्योनापृथिवि०) मन्त्र से परिभाषा प्रकरण में लिखी सप्तमृत्तिकाओं को कलश में डाले (याः फलिनी०)

ओंया:फलिनीर्याअफला अपुष्पायाश्चपुष्पिणी: ।
बृहस्पतिप्रसूता स्तानो मुञ्चन्त्वꣳहस: ॥

परिवाजपतिरिति पञ्चरत्नानि कलशे क्षिपेत्—

ओं परिवाजपति:कवि रग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानिदाशुषे ॥

हिरण्यगर्भइति हिरण्यं क्षिपेत्—

ओं—हिरण्यगर्भ:समवर्त्तताग्रे भूतस्यजात:पतिरेक आसीत् । सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषा-विधेम ॥

युवासुवासा इति वस्त्रेण रक्तसूत्रेण च कलशं वेष्टयेत् ।

ओं युवासुवासा: परिवीतआगात्सउ श्रेयान्भवति जायमान: । तं धीरास:कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त: ॥

पूर्णादर्वीति पूर्णपात्रमुपरिन्यसेत्—

ओं पूर्णादर्विपरापत सुपूर्णापुनरापत । वस्नेवविक्रीणा-वह इषमूर्जꣳशतक्रतो ॥

---

से शुद्ध फल उसमें डाल कर तदनन्तर (परिवाजपति०) मन्त्र में पञ्च-रत्नों को कलश में गिरावे (हिरण्यगर्भ:०) मन्त्र से कलश में सुवर्ण डाले। यदि सुवर्ण का घड़ा हो तो सुवर्ण न डाले (युवासुवासा०) पढ़के धोये हुये नये वस्त्र को तथा केशर में रंगे सूत को कलश में लपेटे । फिर (पूर्णादर्वि०) मन्त्र से श्वेत चावल पूरित मिट्टी का ढकना पात्र कलश पर धरे । तब

ततो वरुणमावाहयेत्—

ओं तत्त्वायामि ब्रह्मणावन्दमानस्तदाशास्ते-यजमानो-हविर्भिः । अहेडमानोवरुणेह वोध्युरुश समान आयुः प्रमोषीः ।।

वरुणं साङ्गं सपरिवारमावाहयामि । ओं भूर्भुवःस्वः-अपांपतये वरुणाय नमः । इति मन्त्रेण षोडशोपचारैः संपूजयेत्पञ्चो-पचारैर्वा, ततो गङ्गाद्यावाहनं कुर्यात्—

सर्वेसमुद्राःसरितस्तीर्थानि जलदा नदाः ।

आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ।।

ततःकलशाभिमंत्रणम् ।। [स्पृशंत्वनामिकाग्रेण क्वचिदा-लोकयन्नपि । अनुमंत्रणंसर्वत्रसदैवमनुमंत्रयेदितिदेवयाज्ञिकः]

कलशस्य मुखेविष्णुः कंठेरुद्राःसमाश्रिताः ।

मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाःस्मृताः ।।

कुक्षौ तु सागराःसप्त सप्तद्वीपावसुन्धरा ।

ऋग्वेदोऽथयजुर्वेदः सामवेदोह्यथर्वणः ।

अङ्गैश्चसहिताः सर्वे कलशन्तुसमाश्रिताः ।।

---

वरुण देवता का आवाहन (तत्वायामि०) मन्त्र से करे कि मुझे मृत्यु से बचाइये कलश में वरुण देवता का आवाहन करके (ॐ भूर्भुवः०) मन्त्र पढ़के वरुण देवता का षोडशोपचार पूजन कलश पर करे। तत्पश्चात् (सर्वे समुद्राः०) इत्यादि श्लोकों द्वारा गङ्गादि नदी तीर्थों का आवाहन कलश में करे। (स्मरण रहे कि यह सब कृत्य कलश के जल को अच्छा पवित्र करने के लिये है, इस जल के अभिषेक से यजमान पवित्र होगा।)

फिर (कलशस्यमुखे०) इत्यादि श्लोक पढ़ता हुआ दाहिने हाथ

प्रार्थना-देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोसितदाकुंभ विधृतोविष्णुनास्वयम् ॥
त्वत्तोयेसर्वतीर्थानि देवाःसर्वेत्वयिस्थिताः ।
त्वयितिष्ठंतिभूतानि त्वयिप्राणाःप्रतिष्ठिताः ॥
शिवःस्वयंत्वमेवासि विष्णुस्त्वंचप्रजापतिः ।
आदित्यावसवोरुद्रा विश्वेदेवासपैतृकाः ॥
त्वयितिष्ठन्तिसर्वेऽपि यतःकामफलप्रदाः ।
त्वत्प्रसादादिमंयज्ञं कर्तुमीहेजलोद्भव ॥
सान्निध्यंकुरुमेदेव प्रसन्नोभवसर्वदा ॥
नमोनमस्तेस्फटिकप्रभाय- सुश्वेतहारायसुमंगलाय ।
सुपाशहस्तायझषासनाय जलाधिनाथायनमोनमस्ते ॥
पाशपाणेनमस्तुभ्यं पद्मिनीजीवनायक ।
पुण्याहवाचनंयावत्तावत्त्वंसन्निधौभव ॥

इति प्रार्थयेत् ।

# अथ पुण्याहवाचनम् ॥

अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिशिरस्याबध्या-दनंतरं दक्षिणेन पाणिना पुरोहितः स्वर्णपूर्णकलशं धारयेत् ततो यजमानः—

ओं त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः । अतोधर्माणिधारयन् ॥

दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच । तेनायुष्प्रमाणेन-

---

की अनामिका से कलश का स्पर्श करे (देव दानव०) आदि श्लोकों से प्रार्थना करे । फिर पृथिवी पर दोनों जानु लगाकर खिले कमल के तुल्य दोनों हाथ की अंजलि शिर पर धारण करे । तब आचार्य वा

पुण्यंपुण्याहंदीर्घमायुरस्त्वितिभवंतोब्रुवंतुइतिवदेत् । ततः पुण्यं-पुण्याहंदीर्घमायुरस्त्वितिद्विजाः । एवं सर्वत्र यजमानवचनान्तरं ब्राह्मणाःप्रतिवचनं दद्युः । ब्राह्मणानां हस्ते सुप्रोक्षितमस्तुयजमानः- शिवा आपः सन्तु । ब्राह्मणाः कुम्भस्थजलात्किंचिद्धस्ते गृहीत्वा—

ओं शन्तआपोधन्वन्याः३ शन्तेसन्त्वनूप्याः । शन्तेख-नित्रिमा आपः शंय':कुम्भेभिराभृताः ॥

इतिमन्त्रेण यजमानपत्न्योरुपरिसिञ्चेयुः । ओंसन्तुशिवाआपः । यज०—सौमनस्यमस्तु ब्रा०-अस्तु सौमनस्यम् यज०—अक्षतंचास्तु-मेपुण्यंदीर्घमायुर्यशोबलम् । यद्यच्छ्रे यस्करंलोके तत्तदस्तु सदामम । अक्षतं चारिष्टं चास्तु । ब्रा०—अस्त्वक्षतमरिष्टं च । यज०—गन्धाः पान्तु सौमङ्गल्यं चास्तु - इतिभवन्तो ब्रुवंतु ब्रा०—

त्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्धनम् । उर्वारुकमिव-बन्धनान्मृत्योर्मुक्षीयमामृतात् ।

ओ३म्—पान्तु—गंधा अस्तु सौमङ्गल्यं च । यज०—अक्षताः

---

पुरोहित दहिने हाथ से सुवर्ण सहित घट को धारण करे । तदनन्तर यजमान (ॐ त्रीणि०) इत्यादि मन्त्र और (तेनायुष्प्रमाणेन०) इत्यादि वाक्य पढ़ के पुण्याहवाचन का आरम्भ करे कि पुण्य बढ़े पुण्य का दिन हो आयु बढ़े तब ऐसा ही ब्राह्मण लोग यहाँ और आगे सर्वत्र यजमान के तुल्य प्रति-वाक्य बोलें फिर ब्राह्मणों के हाथ में (सुप्रो०) से जल सेचन करे । यजमान-जल कल्याणकारी हो । तब ब्राह्मण लोग कलश से जल लेकर (शन्तआपः) मन्त्र से यजमान और पत्नी के ऊपर सेचन करें । यज०-मन प्रसन्न हो । ब्रा०-अस्तु० यज०—मेरा पुण्य अक्षय हो आयु यश और बल बढ़े लोक में जो २ कल्याणकारी कर्म हैं वह मेरे घर सदा होता रहे । अक्षय पुण्य हो हानि न हो । ब्रा०—ऐसा ही हो । यज० सुगन्ध मेरी रक्षा करें मृत्यु से

पान्तु—आयुष्यमस्तु । ब्रा०—ओंपान्त्वक्षताअस्तु—आयुष्यम् । यज० पुष्पाणिपान्तु सौश्रियमस्तु । ब्रा०—ओंपान्तु पुष्पाणि—अस्तु सौश्रियम् । यज०=ताम्बूलानि पान्तु ऐश्वर्यमस्तु । ब्रा० पांतु ताम्बूलानि अस्त्वैश्वर्यम् । यज० दक्षिणाः पांतु बहुदेयं चास्तु । ब्रा०—पांतु दक्षिणा अस्तु बहुद्देयम् । ततो यजमान आचार्यादीन्प्रणम्य वदेत् शान्तिः पुष्टिस्तुष्टिः श्रीर्यशोविद्याविनयोवित्तं बहुपुत्रं चायुष्यं चास्तु । ब्रा० अस्तु शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चेतिवदन्तो यजमानं शिरस्यभिषिञ्चेयुः । यज०—यं कृत्वा सर्ववेदयज्ञक्रियाकरकर्म्मारम्भाः शुभाः शोभना प्रवर्त्तन्ते तमोङ्कारमादिं कृत्वा ऋग्यजुः सामाशीर्वचनं वहृ वृषिसम्मतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्य पुण्याहं वाचयिष्ये । ओंवाच्यतामिति विप्रा वदेयुः । ततो यजमानो ब्राह्मणानां हस्तेऽक्षतान् दद्यात् ते च भद्रमित्यादिमन्त्रैराशिषो वदेयुः ।

ओं भद्रंकर्णेभिःशृणुयामदेवा भद्रंपश्येमाक्षभिर्यजत्राः ।

---

बचावें । अच्छा मंगल हो ब्राह्म०—(त्र्यम्बक०) मन्त्र से आशीर्वाद देके कहें सुगन्ध तुम्हारी रक्षा करें अच्छा मङ्गल हो यज०— अक्षत साङ्गोपाङ्ग विद्यमान जिनमें कुछ त्रुटि न हो ऐसे प्राणी व अप्राणी रक्षा करें । आयु बड़ा हो । ब्रा० यह सत्य ही हो । यज०—पुष्प रक्षा करें । अच्छी शोभा हो। ब्रा० ऐसा ही हो । यज०—पान रक्षा करें ऐश्वर्य हो । ब्रा० ऐसा ही हो । यज०—दक्षिणा रक्षा करें । दान देने के लिये बहुत धनादि हों । ब्रा० ऐसा ही हो । यज०—शान्ति पुष्टि संतोष शोभा कीर्ति यश विद्या नम्रता भोग बहुत पुत्र और बहुत आयु हो । ब्रा० यह सब सत्य हो ऐसा कहते हुये यजमान के शिर पर थोड़ा अभिषेक करें । यज०—जिसको लेकर सब वेद सब यज्ञ और सब कर्मों के आरम्भ अच्छे शुभ काम निर्विघ्न होते हैं मैं उस ओंकार को आदि मान कर ऋग् यजुः तथा सामवेद सम्बन्धी बहुत ऋषियों के सम्मत प्रसिद्ध पुण्याह को आप लोगों की आज्ञा से कहलाऊंगा ।

स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहिदेवहितं यदायुः ॥ देवानांभद्रासुमतिर्ऋजूयतां देवाना ..रातिरभिनो- निवर्त्तताम् । देवाना ँ सख्यमुपसेदिमावयं देवान- आयुःप्रतिरन्तु जीवसे ॥ २ ॥ नतद्रक्षा ँ सिनपिशाचा स्तरन्ति देवानांमोजःप्रथमज ँ ह्येतत् । योविभर्त्तिदाक्षयण ँ- हिरण्य ँ सदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ दीर्घायुस्तओषधेखनिता यस्मैचत्वाखनाम्यहम् । अथोत्वदं घायुर्भूत्वा शतवल्शाविरोहतात् ॥ ४ ॥ ओं— द्रविणोदाद्रविणसस्तुरस्य द्रविणोदाःसनरस्यप्रय ँ सत् । द्रविणोदावीरवतीमिषंनो द्रविणोदारासतेदीर्घमायुः ॥ ५ ।

ओं सवितापश्चात्सवितापुरस्तात्सवितोत्तरा- त्सविताऽधरात्तात् । सवितानः सुवतुसर्वताति सवितानोरा- सतांदीर्घमायुः ॥ ६ ॥ नवोनवो भवति जायमानोऽन्हांकेतु रुषसामेत्यग्रम् । भाग देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते- दीर्घमायुः ॥ ७ ॥ ओं उच्चादिविदक्षिणावन्तोअस्थुर्ये अश्वदाःसहतेसूर्येण । हिरण्यदाअमृतत्त्वंभजन्ते वासोदाः सोम- प्रतिरन्त आयुः ॥ ८ ॥ आपउन्दन्तुजीवसे दीर्घायुत्वाय वर्चसे । यस्त्वाहृदाकीरिणामन्यमानो मर्त्योजोहवीमि ॥९ ॥

---

ब्रा० कहलाइये । तव यजमान ब्राह्मणों के हाथ में धान वा विना कुटे जौ

जातवेदो यशोऽअस्मासुधेहि प्रजाभिरग्नेअमृतत्वमश्याः ।
यस्मैत्वंसुकृते जातवेद उलोकमग्नेकृणवः स्योनम् । १०॥
अश्विनंसपुत्रिणंवीरवन्तंगोमन्तंरयिन्नुशतेस्वस्ति ।

ततो यजमानः—व्रतनियमजपतपःस्वाध्यायक्रतुशमदमदया-दानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् । विप्राः - समाहितमनसः स्मः । यजमानः—प्रसीदन्तु भवन्तः । विप्राः—प्रसन्नाःस्म । यजमानः—ओंशान्तिरस्तु ओंपुष्टिरस्तु । ओंतुष्टिरस्तु । ओंवृद्धिरस्तु । ओं अविघ्नमस्तु । ओं आयुष्यमस्तु । ओं—आरोग्यमस्तु । ओंशिव कर्म्मास्तु । ओं कर्मसमृद्धिरस्तु । ओं—वेदसमृद्धिरस्तु । ओंशास्त्रसमृद्धिरस्तु । ओंपुत्रपौत्रसमृद्धिरस्तु । ओधनधान्यसमृद्धिरस्तु । ओंइष्टसम्पदस्तु । ओंअरिष्टनिरसनमस्तु । ओंयत्पापमनारोग्यमशुभकल्याणंतत्प्रतिहतमस्तु । ओंयच्छ्रेयस्तदस्तु । ओं उत्तरे कर्मण्यविघ्नमस्तु । ओंउत्तरोत्तरमहरहरभिवृद्धिरस्तु ओंउत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । ओंतिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नसम्पदस्तु । उदकसेचनम् । ओंतिथिकरण-

---

देवे और ब्राह्मण लोग (भद्रं.) इत्यादि मन्त्रों से आशीर्वाद कहें । यज०-व्रत नियम जप तप यज्ञ शान्ति इन्द्रिय निग्रह दया दान करने वाले सब वेदाध्यायी ब्राह्मणों का मन एकाग्र हो ।

ब्रा०—हमारा मन सावधान है । यज०—आप लोग मुझ पर प्रसन्न हों ब्रा०—प्रसन्न हैं । यज०—शान्ति हो, पुष्टि हो, वृद्धि हो विघ्न न हों, दीर्घायु हो निरोगता हो कर्म कल्याणकारी हो कर्म वेदशास्त्र पुत्र और धन-धान्य की समृद्धि हो । इष्ट सम्पत्ति हो, अनिष्ट की निवृत्ति हो, पाप नष्ट हों, श्रेय प्राप्त हो भावी कर्म में विघ्न न हों । आगे २ दिन २ बढ़ती हो । आगे की क्रिया अच्छी शुभ हों । तिथ्यादि की सम्पत्ति हों, इत्यादि भी कहे । ब्रह्मद्वेषियों का नाश हो । लुटेरे डाकू नष्ट हों कर्म में विघ्न

मुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । ओंतिथिकरणे समुहूर्त्ते सनक्षत्रे संग्रहे साधिदेवते प्रीयेताम् । ओं दुर्गापाञ्चाल्यौ प्रीयेताम् । ओंमग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् । ओमिन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् । ओंमाहेश्वरीपुरोगा उमामातरः प्रीयन्तम् । ओमरुन्धतीपुरोगाः पतिव्रताः प्रीयन्ताम् । ओंविष्णुपुरोगाः सर्वदेवाः प्रीयन्त.म् । ओंब्रह्मपुरोगाः सर्ववेदाः प्रीयन्ताम् । ओंब्रह्मच ब्राह्मणाश्च प्रीयन्ताम् । ओंश्रीसरस्वत्यौ प्रीयेताम् । ओंश्रद्धामेधे प्रीयेताम् ? ओंभगवती कात्यायनी प्रीयताम् । ओंभगवती माहेश्वरी प्रीयताम् । ओंभगवती ऋद्धिकरी प्रीयताम् । ओं भगवती सिद्धिकरी प्रीयताम् । ओंभगवती पुष्टिकरी प्रीयताम् । ओंभगवती तुष्टिकरी प्रीयताम् । ओंभगवन्तौ विघ्नविनायकौ प्रीयेताम् । ओंसर्वाः कुलदेवताः प्रीयन्ताम् । ओंसर्वाः ग्रामदेवताः प्रीयन्ताम् । हताश्च ब्रह्म विद्विषो हताश्च परिपन्थिनौ हता अस्य कर्मणो विघ्नकर्तारः शत्रवः पराभवं यान्तु । ओंशाम्यन्तु घोराणि ओंशाम्यन्तु पापानि ओंशाम्यन्त्वीतयः शुभानि बर्द्धन्ताम् । ओंशिवा आपःसन्तु । ओंशिवाऋतवःसन्तु । ओंशिवा अग्नयः सन्तु । ओंशिवा आहुतयः सन्तु । ओंशिवा ओषयः सन्तु । ओंशिवा वनस्पतयः सन्तु । ओंशिवा अतिथयः सन्तुः । ओमहोरात्रे शिवे स्याताम् । ओंनिकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः

---

करने वाले शत्रुओं की हार हो। घोर भयंकर कृत्य शान्त हों, पाप शान्त हों। विक्षेप शान्त हों शुभ काम बढ़े जल और ऋतु कल्याण सुखकारी हों। गार्हपत्यादि तीनों अग्नि सुखकारी हों आहुतियां सुख हेतु हों औषधियां सुखकारी हों वनस्पति उदुम्बरादि सुखहेतु हों। अतिथि कल्याणकारी हों दिनरात्रि सुखकारी हों। सब ग्राम 2 नगर 2 में जल बरसे ओषधियां फलवती हों अप्राप्त वस्तुओं की प्राप्ति हो प्राप्त की रक्षा हो। नवग्रहादि पूर्ववत् कहें। यहाँ प्रत्येक वाक्य में ब्राह्मण लोग प्रत्युत्तर रूप आशीर्वाद

पच्यन्तांयोगक्षेमो नः कल्पताम् । प्रतिवाक्यं ब्राह्मणास्तादृशमेव प्रत्युत्तरं वदेयुः यजमानः—ओंशुक्राङ्गारकबुधवृहस्पतिशनैश्चरराहूकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाःप्रीयन्ताम् । ओंभगवान्नारायणः प्रीयताम् । ओंभगवान्पर्जन्यः प्रीयताम् । ओं भगवान्महासेनःप्रीयताम् । अत्रापि पूर्ववदेव ब्राह्मणानां प्रतिवचनं बोध्यम् । यजमानः—ओं पुण्याहकालान् वाचयिष्ये ब्राह्मणाः—ओंवाच्यताम् ॥

ॐ—उद्गातेवशकुनेसामगायसि ब्रह्मपुत्रइवसवनेषुशंससि । वृषेववाजीशिशुमतीरपोत्या सर्वतो न शकुनेभद्रमावद-विश्वतो नः शकुनेपुण्यमावद ।

अनया पुण्याहएव कुरुते । यज०—भो ब्रह्मणाः ! ममगृहे-अस्यांक्रियमाणस्य कर्मणः पुण्याहं भवंतो ब्रुवन्तु इतिस्वयं मंद-स्वरेणोक्त्वा—ब्राह्मणः पुण्याहमित्युक्तेपुनस्तदेव मध्यमस्वरेणोक्त्वा-तैस्तथैवोक्तं पुनरुच्चस्वरेणोक्त्वा तथैव तैरुक्ते यजमान :—

ब्राह्मंपुण्यमहर्यच्च सृष्ट्युत्पालनकारकम् ।
वेदवृक्षोद्भवंनित्यं तत्पुण्याहं ब्रुवन्तुनः ॥

ॐ—पुनन्तुमादेवजनाः पुनन्तुमनसा धियः ।

---

देते जावें । यज०—पुण्याह के समय को कहाऊंगा । ब्रा०—कहलाइये । ऐसा कहकर (उद्गातेव०) मन्त्र पढ़ें और इस ऋचा से पुण्याह ही होता है ! मेरे घर में इस कर्म का शुभ समय आप कहें ऐसा मन्दस्वर से ब्रा०—इस कर्म का शुभ समय हो । फिर द्वितीय बार इसी वाक्य को यजमान तथा ब्राह्मण दोनों मध्यम स्वर से कहे । और तृतीयवार उच्चस्वर से कहें । यज०—ब्राह्म कल्प रूप जो सृष्टि उत्पन्न कराने वाला पुण्यदिन है जो वेद रूप वृक्ष से प्रकट होता है तथा नित्य है उस दिन को हमारे लिये पुण्य होना कहिये तब (पुनन्तुमा०) मन्त्र पढ़कर कहे कि पृथ्वी का उद्धार

पुनन्तुविश्वाभूतानि जातवेदः ! पुनोहि मां ॥

पृथिव्यामुद्धृतायान्तु यत्कल्याणंपुराकृतम् । ऋषिभिः सिद्ध-संघैश्च तत्कल्याणंब्रुवन्तुनः ॥ भोब्राह्मणाः सकुटुम्बस्य सपरिवा-रस्यममगृहेक्रियमाणस्यामुककर्मणः कल्याणं भवंतो ब्रुवंतु । ब्राह्मणाः—ओंकल्याणम् ।

ॐ—यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याᳪशूद्राय चार्य्याय च स्वाय चारणाय च । प्रियोदेवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुपमादो नमतु ।

सागरस्ययथावृद्धि—र्महालक्ष्म्यादिभिःकृता ।
सम्पूर्णा सप्रभावा च तां च ऋद्धि ब्रुवंतु नः ॥

भोबाह्मणाः ! सकुटुम्बस्य ममगृहे क्रियमाणस्यामुककर्मणः ऋद्धिं भवंतो ब्रुवंतु । ब्रा० ऋध्यताम् ।

ॐ—सत्रस्यऋद्धिरस्यगन्मज्योतिरमृताअभूम । दिव-पृथिव्याअध्यारुहामाविदामदेवान्स्वर्ज्योतिः ।

स्वस्तिस्तुयाऽविनाशाख्या पुण्यकल्याणवृद्धिदा ।
विनायकप्रियानित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥

---

करने में ऋषियों और सिद्ध लोगों ने जो कल्याण किया वह कल्याण हम लोगों के लिये कहिये। हे ब्राह्मण ! कुटुम्ब परिवार सहित मेरे घर में अमुक कर्म कल्याणकारी हो ऐसा कहिये । ब्रा०—कल्याण हो तीनवार कहके (यथेमा०) मन्त्र पढ़े । यज०—हे ब्राह्मणो ! कुटुम्ब सहित मेरी ऋद्धि आप कहें। ब्रा० —ऋद्धि हो ऐसा तीन वार कहकर (सत्रस्य) मन्त्र पढ़के आशीर्वाद देवें । यज० हे ब्राह्मणो ! कुटुम्ब परिवार सहित विनाश न होना रूप मेरी स्वस्ति आप कहें । ब्रा०—आयुष्मते स्वस्तिः

यज०-भो ब्राह्मणाः ! सकुटुम्बस्य सपरिवारस्य ममगृहे क्रियमाणस्यामुककर्मणः स्वस्तिं भवंतो ब्रुवंतु । ब्रा०-आयुष्मते स्वस्तिः ३ त्रिः ।

ओं—स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिन पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥

यजमान :—

समुद्रमथनाज्जाता जगदानन्दकारिका ।

हरिप्रियाचमाङ्गल्या तांश्रियंचब्रुवन्तुनः ॥

भोब्राह्मणाः ! मम सकुटुम्बस्य गृहे क्रियमाणस्यामुककर्मणः श्रियं भवन्तो ब्रुवंन्तु । ब्रा०-अस्तु श्रीः ३ त्रिः ।

ओं—श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् । इष्णन्निषाणामुम्मइषाणसर्वंलोकंमइषाण ॥ ओं—शतमिन्नुशरदोऽअन्तिदेवा । यत्रानश्चक्राजरसंतनूनाम् । पुत्रासोयत्रपितरोभवन्ति मानोमध्यारीरिषतायुर्गन्तोः अस्तु श्रीः ३ त्रिः । मनसः काममाकूतिंवाचः सत्यमशीय । पशूनाᳫं रूपमन्नस्य रसोयशः श्रीः श्रयतांमयि ॥

---

ऐसा तीनवार कहकर (स्वस्तिन०) इत्यादि स्वस्तिवाचन के मन्त्रों से आशीर्वाद देवें । यज०-हे ब्राह्मण ! कुटुम्ब सहित मेरी श्री को आप कहें । ब्रा०-अस्तु श्रीः ऐसा तीन वार कह कर (श्रीश्च०) दो मन्त्रों से आशीर्वाद कह कर फिर अस्तु श्रीः, वाक्य को तीन वार कहें । तब (मनसः) मन्त्र से आशीर्वाद देके कहें कि लोकों का रक्षक प्रजापति सूर्य और

प्रजापतिर्लोकपालो धाताब्रह्माचदेवराट् ।
भगवान्शाश्वतोनित्यः सनोरक्षतुसर्वतः ॥
भगवान् प्रजापतिः प्रीयताम् ।

ॐ—प्रजापतेनत्वदेतान्यन्यो विश्वारूपाणि परितोबभूव । यत्कामास्तेजुहुमस्तन्नोअस्तु वयँ स्यामपतयोरयीणाम् ॥

आयुष्मते स्वस्तिः ३ त्रिः ।

ॐ—प्रतिपन्थामपद्महि स्वस्तिगामनेहसम् ।येनविश्वाः परिद्विषो वृणक्तिविन्दतेवसु ।

अनेन पुण्याहवाचनेन प्रजापतिः प्रीयताम् । अस्मिन्पुण्याहवाचने न्यूनातिरिक्तोयोविधिः सउपविष्टब्राह्मणानां वचनात् श्री महागणपतिप्रसादाच्च परिपूर्णोऽस्तु । ओमस्तु परिपूर्णः । ततोऽभिषेकस्तत्र पत्नीं बामत उपवेशयेत् । कलशोदकं गृहीत्वाऽविधुराश्चत्वारो ब्राह्मणा दूर्वाम्रपल्लवैः सपत्नीकं यजमानमभिषिञ्चेयुः । तत्र मंत्राः –

---

देवों का राजा, धारण करने वाला ब्रह्मा तथा नित्य सनातन भगवान परमात्मा हम सब की सब ओर से रक्षा करें। भगवान् प्रजारक्षक प्रसन्न हों ऐसा कह (प्रजापते०) मन्त्र से प्रार्थना करके दीर्घायु यजमान के लिए स्वस्ति हो ऐंसा तीनवार कहें (प्रतिपन्था०) मन्त्र से प्रार्थना करें कि इस पुण्याहवाचन से प्रजापालक परमात्मा प्रसन्न हो । यजमान कहे कि इस स्वस्ति पुण्याहवाचन कर्म में न्यूनातिरिक्त विधान बैठे ब्राह्मण और श्रीगणेशजी की कृपा से पूर्ण हो तब ब्राह्मण भी वैसा ही कहें । तदनन्तर वेदपाठी ब्राह्मण लोग पत्नी और यजमान का अभिषेक कलश के जल से करें। इस समय यजमान पत्नी को अपने वामभाग में बैठावे । सावधान हुए ईश्वर भक्ति में तत्पर ब्राह्मण लोग दूर्वा आम के पत्तों [जो प्रथम कलश में डाले थे] को भिगो २ कर सपत्नीक यजमान का आगे लिखे प्रत्येक मन्त्र से

ओम् पय:पृथिव्यांपयओषधीषु पयोदिव्यन्तरिक्षेपयोधाः। पयस्वतो:प्रदिश:सन्तुमह्यम्। ओंपञ्चनद्य:सरस्वतीमपियन्ति सस्रोतस:। सरस्वतीतुपञ्चधा सोदेशेऽभवत्सरित्॥ ओंपुनन्तुमा देवजना: पुनन्तुमनसाधिय:। पुनन्तु विश्वाभूतानि जातवेद: ! पुनीहिमा॥ ओम् देवस्य त्वा सवितु: प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ सरस्वत्यै वाचो यन्तुर्यन्त्रिये॥ दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ॥ ओम् देवस्यत्वा०सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्ने: साम्राज्येनाभिषिञ्चाम्यसौ॥ देवस्यत्वा। अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चाम्यसौ॥ सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चाम्यसौ॥ इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चाम्यसौ॥

ओंविश्वानिदेवसवितर्दुरितानि परासुव। यद्भद्रंतन्न आसुव॥ ओंधामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पति:। सचेतसोविश्वेदेवा यज्ञप्रावन्तुन:शुभे॥ ओंत्वंयविष्ठदाशुषो नॄं:पाहिशृणुधीगिर: रक्षातोकमुतत्मना॥ ओमन्नपतेऽन्न-

---

अभिषेक करें (अभिषिञ्चाम्यसौ यहां अभिषिञ्चामि से आगे पांचों मन्त्रों से असौ पद को निकाल कर यजमान का शर्मान्तादि नाम लेवे जैसे— अभिषिञ्चामि तपोधन शर्मन्। युधिष्ठिर वर्मन्। लक्ष्मी चद गुप्त ! पीछे

स्यनोदेह्यनमोवस्यशुष्मिण: । प्रप्रदातारन्तारिषऊर्जंनोधेहि-द्विपदेशंचतुष्पदे ॥ ओंद्यौ:शान्तिरन्तरिक्ष ँ शान्ति: पृथिवी-शान्तिराप: शान्तिरोषधय: शान्ति: । वनस्पतय:शान्ति-र्विश्वेदेवा:शान्तिर्ब्रह्मशान्ति: सर्वं ँ शान्ति: शान्तिरेवशान्ति: सामाशान्तिरेधि ॥ ओंयतोयत:समीहसेततोनोअभयंकुरु । शन्न कुरुप्रजाभ्योऽभयंन:पशुभ्य: ॥ अमृताभिषेकोऽस्तु शान्ति: शान्ति: शान्ति: सुशान्तिर्भवतु ॥

ततः पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनं कार्यम् ।

ओमनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्मेऽदा:- पुत्रवती-दक्षिणतऽइन्द्रस्याधिपत्ये प्रजांमेऽदा: । सुषदापश्चाद्देवस्यस-वितुराधिपत्ये चक्षुर्मेऽदा: । आश्रुतिरुत्तरतोधातुराधिपत्ये-रायस्पोषमेऽदा: । विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओ-जोमेऽदा: । विश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥

इतिमन्त्रेणनीराजनम् ।

॥ इतिस्वस्तिपुण्याहवाचनं समाप्तम् ॥

---

(अमृताभिषेकोऽस्तु) वाक्य कहें । शान्ति: पद को तीन वार कहकर पति पुत्रों वाली सौभाग्यवती चार ब्राह्मण स्त्रियां पत्नी यजमान की आर्त्ति करें (ओमनाधृष्टा०) इत्यादि मन्त्र आचार्य पढ़े । यह स्वस्तिपुण्याहवाचन -कर्म समाप्त हुआ ।

# अथ मातृकापूजनादिकर्मत्रयप्रस्तावः

अत्र मातृकापूजनं आयुष्यमन्त्रजपाः नान्दी श्राद्धं चेति कर्मणां संक्षेपेण विचारः प्रयोगश्च लिख्यते । यद्यपि प्रयोगरत्नादिग्रन्थेष्वविघ्नमण्डपादीनां बहुविधमाणां नवग्रहादीनां तद्देवतानां च पूजनविस्तारो दृश्यते तथापि विस्तरभयात्तत्परित्यज्य पारस्करगृह्यभाष्योक्तपद्धतिमनुसृत्यात्र मातृपूजनादिकं व्याख्यातम् ।

---

यहां मातृका पूजनादि का विचार संक्षेप से लिखते हैं यद्यपि प्रयोग रत्नादि ग्रन्थों मे अविघ्न मण्डपादि बहुविध मातरों नवग्रहों तथा उनके देवताओं का पूजन वा होमादि विस्तार से लिखा है तथापि हमने यहां विस्तार भय से विस्तार को छोड़के पारस्कर गृह्यसूत्र के भाष्य में लिखी पद्धति के अनुसार मातृकादि पूजनका व्याख्यान लिखा है। ब्रह्मपुराण में कहा है कि कई संस्कार एक साथ करने की दशा में शान्ति पाठ गणेशपूजन स्वस्तिपुण्याहवाचन तथा मातृकापूजनादि काम सबके आदि में एक वार ही करें, प्रत्येक के आदि में पृथक्-पृथक् न करे। शुद्ध लीपी हुई भित्ति पर पाँच या सात घृत की धारा करे वे बहुत ऊंची वा बहुत नीची न हों किन्तु बीच में हों। गणेश, गौरी, पद्मा, शची, मेधा, सावित्री, विजया, जया, देवसेना, स्वधा, स्वाहा, धृति, पुष्टि, तुष्टि, आत्मकुल देवता, वृद्धि श्राद्ध के साथ गणेश को आदि लेके चौदह मातृकाओं का पूजन करना चाहिये। मातरः तथा लोकमातरः यह सब गौरी आदि के विशेषण हैं। इन सबके पूजन का विधान आगे दिखाते हैं।

यजमान पूर्वाभिमुख बैठकर पत्नी और जिस संतान का संस्कार करना हो उसको अपने से दक्षिण में पूर्वाभिमुख बैठा के आचमन प्राणायाम कर दाहिने हाथ में कुश जल और जौ लेकर (विष्णुर्वि०)

यजमानः प्राङ् मुखउपविश्य पत्नीं संस्कार्यं च दक्षिणत उपवेश्याचम्य प्राणानायम्य कुशयवजलान्यादाय—अद्यशुभपुण्यतिथावमुककर्माङ्गतया गणपतिसहितगौर्यादिचतुर्दशमातृकापूजनमहं करिष्ये । इति संकल्प्य—ओंगणपतयेनमः, गणपतिमावाहयामि । ओंगौर्यैनमः गौरीमावाहयामि । ओंपद्मायै नमः पद्मामा० । ओंशच्यै नमः शचीमा० । ओंमेधायै नमः, मेधामा० । ओंसावित्र्यै नमः, । सावित्रीमावा० । ओंविजयायै नमः, विजयांमा० । ओंजयायै नमः, जयामावाहयामि । ओंदेवसेनायै नमः देवसेनामावा० । ओंस्वधायै नमः स्वधा० । ओंस्वाहायै नमः स्वाहामा० । ओंधृत्यै नमः धृतिमा० । ओंतुष्ट्यै; नमः तुष्टिमा० । ओंपुष्ट्यै नमः पुष्टिमा० । ओमात्मकुलदेवतायै नमः । आत्मकुलदेवतामावाहयामि ।

ओं मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञ-

---

इत्यादि संकल्प करके कहे कि अमुक संस्कार कर्म के अङ्गरूप से गणपति सहित गौरी आदि चतुर्दश मातृकाओं का पूजन मैं करूँगा । तब (ओं गणपतयेनमः०) इत्यादि नाम मन्त्रों से गणपति आदि चतुर्दश मातृकाओं का पूजन करे गौरी आदि चतुर्दश मातृका कहाती हैं उनके आदि में पन्द्रहवें गणेश जी का पूजन जानों । एक पट्टे पर कोरा वस्त्र बिछाकर उस पर गणेशादि देवों का पूजार्थ केशर से रंगे तण्डुल क्रम से पृथक्-२ पन्द्रह स्थानों में रख लेने चाहियें उन्हीं पर गणेशादि का आवहनादि द्वारा पूजन करना उचित है प्रथम (मनोजूति०) मन्त्र से गणेशादि देवों की प्रतिष्ठा करके पूजन करे । नाम मन्त्रों द्वारा आवाहनादि पुष्पाञ्जलि पर्यन्त षोडशोपचारों के साथ गणेशादि पञ्चदशदेवताओं का पूजन ही मातृकापूजन कहाता है । इसके पश्चात् भित्ति पर दक्षिण से उत्तर

मिमंतनोतु । अरिष्टंयज्ञ ँ समिमंदधातुविश्वेदेवासइहमादयन्तामो३प्रतिष्ठ ।

इति मन्त्रेण प्रतिष्ठां कृत्वा=ओंगणपतये नमः=आसनं समर्पयामि । तथैव=ओं गौर्यै नमः=इत्यादिनाममन्त्रैर्गणपत्यादिपञ्चदशानामपि आवाहन आसन पाद्य अर्घ्य, आचमनीय, स्नान वस्त्र, यज्ञोपवीत, गन्ध, पुष्प धूप, दीप, नैवेद्य, ताम्बूल, प्रदक्षिणा पुष्पाञ्जलि इत्येतैः, षोडशोपचारैः पूजनं कुर्यात् । तदनन्तरं कुड्ये उदक्संस्थाः सप्त घृतधारा वसोःपवित्रमिति मन्त्रेण कुर्यात् ।

ओं—वसोःपवित्रमसिशतधार वसोः पवित्रमसिसहस्रधारम् । देवस्त्वासविता पुनातु वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥

तदनन्तर ओं वसोर्धारादेवताभ्यो नमः गन्धं समर्पयामि । पुष्पाणि समर्पयामि । धूपं समर्पयामि । दीपं समर्पयामि । नैवेद्यं समर्पयामि । इत्येवंगन्धादिपञ्चोपचारैरुदक्संस्था वसोर्धाराः पूजयेत् । तदनन्तरमायुष्यमन्त्रजपं कुर्यात् । यथा—

ओं—आयुष्यंवर्चस्य ँ रायस्पोषमौद्भिदम् । इद ँ हिरण्यवर्चस्वज्जैत्रायाविशतादुमाम् ॥ नतद्रक्षा ँ सिनपिशाचास्तरन्ति देवानामोजः प्रथमज- ँ ह्येतत् । योबिभर्त्ति-

---

को घृत की सात धारा (वसोः पवित्रं) मन्त्र से करे । फिर (ओंवसोर्धारा) नाम मन्त्र पढ़ २ के गन्धादि समर्पण द्वारा पञ्चोपचार पूजन उत्तर २ को करना चाहिए । तदनन्तर (ओं आयुष्यवर्चस्य) इत्यादि आयुष्य मन्त्रों का पाठ करे ।

दाक्षायण ँ हिरण्य ँ सदेवेषुकृणुतेदीर्घमायु: । समनुष्येषुकृणुतेदीर्घमायु:।। यदाबध्नन्दाक्षायणा हिरण्य ँ शतानीकायसुमनस्यमाना: । तन्मआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासम् ।। ओंभद्रंकर्णेभि:शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्रा: । स्थिरैरंगैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहिदेवहितं यदायु: ।। शतमिन्नुशरदोअन्तिदेवयत्रानश्चक्राजरसंतनूनाम् । पुत्रासोयत्रपितरोभवन्ति मानोमध्यारीरिषतायुर्गन्तो: ।।

---

# अथ नान्दीश्राद्धविचार: ।

तत्र काल:—मातृश्राद्धंतुपूर्वाह्णे मध्यान्हेपैतृकंतथा । ततो मातामहानांच वृद्धौश्राद्धत्रयस्मृतमिति । हेमाद्र्यादिनिबन्धे उक्तम् । तथा अलाभेभिन्नकालानां नांदीश्राद्धत्रयंबुधः ।। पूर्वेद्युर्वैप्रकुर्वीत पूर्वाह्णेमातृपूर्वकमितिवृद्धमनुवचनम् । तच्च कात्यायनेन पृथङ्मातृपार्वणोहपूर्वकनवदैवतनांदीश्राद्धकरणं निषिद्धम् ।। यथा—

अब नान्दी श्राद्ध का विचार दिखाते हैं। आभ्युदयिकश्राद्ध वृद्धिश्राद्ध और नान्दीश्राद्ध ये सब इस एक ही कर्म के नाम हैं। उसके करने का काल हेमाद्रि में यह लिखा है कि मातृश्राद्ध पूर्वाह्ण में पितृश्राद्ध मध्यान्ह में तदनन्तर मातामह (नाना) आदि का श्राद्ध करे और वृद्ध मनु में लिखा है कि भिन्न २ कालों में तीनों श्राद्ध करने का समय न मिले तो कर्त्तव्य संस्कार से पहिले दिन, तीनों नान्दी श्राद्ध एक ही समय एक ही साथ कर लेवे। परन्तु कात्यायन आचार्य ने पितृश्राद्ध से पृथक् माता का दैवत नान्दीश्राद्ध करने का निषेध किया है कि शान्ति के

आयुष्याणिचशांत्यर्थं जप्त्वातत्रसमाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।

सूत्रे विशेषोपदेशाभावः ।। तत्र तु नांदीमुखाःपितरःपितामहाः प्रपितामहाः सपत्नीकाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाइति षड्भ्यः पितृभ्यः पार्वणद्वयं स्पष्टम् ।। तच्च सांकल्पिकविधिना सांकल्पिके च समन्त्रकावाहनार्घाग्नौकरणपिंडदानविकिराक्षय्यस्वधावाचप्रश्नेत्येतत्सप्तकं वर्ज्यम् । सांकल्पे—शुभाय प्रथमांतेन वृद्धौ संकल्पमाचरेत् । नषष्ट्या यदिवाकुर्यान्महादोषोऽभिजायते । अनस्मद्वृद्धिशब्दानामरूपाणामगोत्रिणाम् । अनाम्नातिलैश्चैव नांदीश्राद्धंचसव्यतः, इति संग्रहे । कृतेनांदीमुखे मध्ये नकुर्याद्द्वितयंपुनः ।। राजाभिषेकेकुर्वीत तथैवपुत्रजन्मनीति कृतेऽभ्युदयश्राद्धेतन्मातृकोत्थापनंविना । नद्वितीयंनांदीमुखं प्रकुर्यात् पुत्रजन्मनि ।। तथैवाभ्युदयंकार्यं राज्ञः पट्टाभिषेचने ।। अन्यथाकुर्वतेमोहादपमृत्युकरंपरम् ।। पुत्रजन्मनि राजाभिषेके च द्वितीयं

---

अर्थ आयुष्य मन्त्रों का जप पाठ करके सावधान हो छः पितरों के लिये श्राद्ध देने का आरम्भ करें। कात्यायन श्राद्ध सूत्र में माता का श्राद्ध भिन्न नहीं कहा किन्तु पितादि तीन और मातामहादि तीन सपत्नीक नान्दी पितरों का श्राद्ध कहा है। इस वृद्धि श्राद्ध को सांकल्पिकविधान से करना चाहिये इसी कारण इसमें समन्त्रक आवाहन अर्घदान, अग्नौकरण, पिण्डदान, विकिर अक्षय्य स्वधावाचक और प्रश्न ये सात कर्माङ्ग नहीं किये जाते शेष किया जाता है शुभ के लिये होने वाले वृद्धिश्राद्ध में प्रथमा विभक्त्यन्त पद संकल्प वाक्यों में बोले षष्ठ्यन्त पद बोलना दोषकारक है। तथा वृद्धिश्राद्ध में अस्मत्पद व वस्वादि स्वरूप गोत्र और पितरों के नाम न बोले। तिलों का भी विनियोग न करे और नान्दीश्राद्ध को सव्य होकर करे अपसव्य से नहीं इसी कारण यह श्राद्ध दैवत माङ्गलिक कहाता है। राजा के अभिषेक और पुत्र जन्म को छोड़ के द्वितीयवार नान्दीश्राद्ध न

नांदीश्राद्धंकुर्यात् अन्यथा न । मंडपोद्वासनात्पूर्वं नान्दीश्राद्धे कृतेपुनः । येकुर्वंतिनरामोहादपमृत्युं व्रजन्तिते ।। इति शास्त्रार्थ-प्रदीपे ।। अथ वृद्धिश्राद्धकर्तुर्जीवत्पितृकत्वे निर्णयः जीवेत्तु यदि-वर्गाद्यस्तवर्गस्तुपरित्यजेदिति न्यायेन जीवत्पितृकः स्वापत्य-संस्कारेषु मातृमातामहपार्वणयुतं नांदीश्राद्धं कुर्यात् ।। मातरि जीवत्यां माता-महपार्वणमेकमेव । मातामहे जीवति मातृपार्वण-मेकमेव । केवल-मातृपार्वणि विश्वदेवा न कार्याः । वर्गत्रयाद्येषु मातृपितृमातामहेषु जीवत्सुनांदीश्राद्धलोपएव सुतसंस्कारेष्वपितः । द्वितीयविवाहाधानपुत्रेष्टिसोमयागादिषु स्वसंस्कारकर्मसु येभ्यएव पितादद्यात्तेभ्यो दद्यात्स्वयंसुतः ।। तथा च मृतमातृमातामह कोपि जीवत्पितृकः स्वसंस्कारे पितुर्मातृपितामहोप्रपितामह्यः ।। पितुः पितुः पितृपितामहप्रपितामहाः ।। पितुर्मातामहप्रमातामह-

---

करे। अर्थात् कर्मों के आरम्भ और समाप्ति में शान्तिपाठादि का कर्त्तव्य माना है सो सब कर्मों के आद्यन्त में शान्ति पाठादि करे तो द्वितीयवार नान्दीश्राद्ध न करे। परन्तु राजाभिषेक और पुत्र जन्म के समय प्रथम स्थापित मातृकाओं का विसर्जन करने के पश्चात् नान्दीश्राद्ध द्वितीयवार करे अन्यथा करने में अपमृत्यु होना दोष जानों।

अब इस वृद्धिश्राद्ध कर्त्ता का पिता जीवित हो तो क्या करे सो दिखाते हैं जिसका पिता जीवित हो वह अपने पुत्र के संस्कारों में माता तथा नानादि का श्राद्ध करे यदि माता भी जीवित हो तो केवल नाना का श्राद्धकरे यदि माता मरगई हो तथा नाना जीवित हो तो केवल माता का ही श्राद्ध करे केवल मातृश्राद्ध में विश्वदेवों को न करे और यदि माता पिता नाना तीनों जीवित हों तो पुत्र के संस्कारों में इस श्राद्ध को न करे। और द्वितीय विवाह श्रौत स्मार्त्त अग्नि स्थापन, पुत्रेष्टि और सोम यागादि अपने संस्कार कर्मोंमें यदि पितादि जीवित हो तो जिन 2 के नाम से पिता श्राद्ध करे उन्हीं 2 के नाम से अभ्युदय श्राद्ध करे। जिसके

वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखा इत्येवं पार्वणत्रयमुद्दिश्य श्राद्धं कुर्यात् ।। नतुस्वमातृमातामहपार्वणोद्देशः । पितरि पितामहे च जीवति स्वसंस्कारे पितामहस्य मातृपितामहीप्रपितामह्य इत्याद्युद्देशः ।। एवं प्रपितामहेऽपि योज्यम् । पितुर्मात्रादिजीवने तत्पार्वणलापएव ।। एवं मृतपितृकस्य जीवन्मातृ-मातामहस्यपितुः पार्वणेनैव नांदीश्राद्धसिद्धिर्ज्ञेया । समावर्तनस्य माणवककर्तृकत्वेपि तदंगभूतनांदीश्राद्धं पितुस्तदभावे ज्येष्ठभ्रात्रादेरधिकारइति केचित् ।। तत्र पिता पुत्रसमावर्तने स्वपितृभ्यो नांदीश्राद्धं कुर्यात् । पिता जीवत्पितृकश्चेत्सुतसंस्कारत्वातृद्वारलोपपक्षो-युक्तइतिभाति माणवकपितुः प्रवासादिना असन्निधाने भ्रात्रादिर्माणवकस्य पितुर्मातृपितामहीप्रपितामह्यइत्याद्युच्चार्य श्राद्धंकुर्यात् । मृत-पितृकमाणवकसमावर्तने पितृव्यभ्रात्रादिरस्य माणवकस्य

---

माता और नाना मरगये हों तथा पिता जीवित हो वह अपने संस्कारों में पिता की माता पितामही प्रपितामही, पिता के पिता, पितामह, प्रपितामह, पिता के मातामह, प्रमातामह, वृद्धप्रमातामह सपत्नीक नांदी-मुखों के नाम से श्राद्ध करे किन्तु माता के नानादि का न करे । यदि पिता और पितामह दोनों जीवित हों तो अपने संस्कारों में पितामह की मातादि तीन तथा पितामह के पितादि तीन के नाम से करे । यदि पिता की मातादि जीवित हों तो अपने द्वितीय विवाहादि संस्कारों में इस श्राद्ध को न करे प्रथम विवाह में पुण्याहवाचनादि का कर्त्ता पिता होता है । इस प्रकार केवल पिता मरगये हों तथा माता और नाना जीवित हों तो एक पितृ, पितामह, प्रपितामह के नाम से ही नांदीश्राद्ध कर्त्तव्य है । समावर्त्तन संस्कार में ब्रह्मचारी के ही यजमान कर्त्ता होने पर भी समावर्त्तन सम्बन्धी नान्दीश्राद्ध में ब्रह्मचारी का पिता नन्दीश्राद्ध करे पिता के अभाव में ज्येष्ठ भ्रातादि करे । अर्थात् पुत्र के समावर्तन में पिता स्वपितरों का श्राद्ध करे । और पिता का पिता भी जीवित

मातृपितामहीप्रपितामह्यइत्याद्युच्चारयेत् । भ्रात्रादेरभावे स्वयमेव स्वपितृभ्यो दद्यात् एवं जीवत्पितृकोपि पितुरसन्निधाने भ्रात्रादेरभावे च पितुः पितृभ्यः स्वयमेव नांदीमुखं कुर्यात् ॥ उपनयनेन कर्माधिकारस्य जातत्वात् ॥ एवं विवाहेपिद्रष्टव्यम् । मृतपितृकस्य चौलोपनयनादिकं पितृव्यमातुलादि कुर्वन् अस्य संस्कार्यस्य पितृपितामहप्रपितामहेत्याद्युच्चार्य श्राद्धं कुर्यात् जीवतः पितुरसन्निधानेन कुर्वन्मातुलादिरस्य संस्कारस्य पितुर्जनकादीनुद्दिश्यैव कुर्यान्नतु संस्कार्यस्य मृतानपि मात्रादीनिति संक्षेपः ।

## अथ सांकल्पिकविधिना नान्दीश्राद्ध-प्रयोगः ।

अद्यपूर्वोच्चारितशुभपुण्यतिथौशांतिपूर्वकगर्भाधानाद्यमुकसंस्काराङ्गत्वेन सांकल्पिकेन विधिना ब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयी

---

हो तो श्राद्ध न करे । यदि संस्कार्य ब्रह्मचारी का पिता देशान्तर जाने आदि कारण से समीप न हो तो भ्रातादि पिता का मातादि के नाम से श्राद्ध करे ।

यदि समावर्त्तन करने वाले का पिता भी मरगया हो तो ब्रह्मचारी के चाचा व भाई आदि संस्कार्य के माता पितादि के नामसे श्राद्ध करें । यदि भ्रातादि कोई न हो तो ब्रह्मचारी स्वयमेव अपने पितादि का श्राद्ध करे । तथा पिता के जीवित होने पर भी समीप न होने के कारण भ्रातादि के अभाव में पिता के पितादि तीन के नाम से श्राद्ध करे क्योंकि उपनयन हो जाने पर कर्माधिकारी हो चुका है । ऐसा ही समावर्त्तनवत विचार विवाह में भी जानो । पिता के मरजाने पर चूड़ाकर्म उपनयनादि संस्कार ज्येष्ठ भ्राता चाचा या मामादि करे वहां संस्कार्य बालक के पिता पितामहादि के नाम से श्राद्ध करें । यदि पिता के जीवित होने पर भी विदेश गमनादि कारण से उपस्थित न होने पर मुण्डनादि करने वाला पितृव्यादि हो तो संस्कार्य के पितादि का श्राद्ध करे किन्तु संस्कार्य

भूतयथाशक्ति हिरण्येन नांदीश्राद्धमहं करिष्ये । इति संकल्प्य नांदीमुखाः सत्यवसुसंज्ञकाः विश्वेदेवाः ओंभूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः । स्वगोत्राःपितृपितामह-प्रपितामहाः सपत्नीकाः नांदीमखाः—

ओंभूर्भुवः स्वः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धःद्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदी-मुखाः ओंभूर्भुवःस्वः इदंवः पाद्यंपादावनेजनं पादप्रक्षालनवृद्धिः । ततआसनदानम्—सत्यवसुसंज्ञकानां विश्वेषां देवानां नांदीमुखा-नाम् । ओंभूर्भुवःस्वः इदमासनम् । सुखासनम् । नांदीश्राद्धे क्षणौ-क्रियेताम् । ओं तथा । प्राप्नुतां भवन्तौ प्राप्नवाव । स्वगोत्राणां पितृपितामहप्रपितामहानां सपत्नीकानां नांदीमुखानाम् । ओंभू० इदमासनम् ।। द्वितीयगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नांदीमुखानां ओंभूर्भुवः स्वः इदमासनम् ।। ततोगंधादिदानम् ।। सत्यवसुसंज्ञकेभ्यो विश्वेभ्योदेवेभ्यो नांदीमुखेभ्यः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ।। स्वगोत्रेभ्यः पितृपितामहप्र-पितामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यः इदंगंधाद्यर्चनं० । द्वितीय गोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्य सपत्नीकेभ्यो नांदी

---

की मातादि मरभी गये हों तो मृत मातादि के उद्देश्य से न करे । यह संक्षेप से दिखा दिया है ।

अब सांकल्पिकरीति से नान्दी श्राद्ध का विधान दिखाते हैं । इस श्राद्ध में सत्य वसु संज्ञक नांदी मुख विश्वेदेव माने जाते हैं उचित संकल्प करके विश्वेदेव पितादि तथा मातामहादि इन तीनों कोटियों का पाद्य, आसन, गन्धादिदान, भोजनान्न निष्क्रयीभूत द्रव्यदान दुग्ध और यवों सहित जलदान इन सब उपचारों से सांकल्पिक पूजन करके नांदीमुख पितृस्थानी ब्राह्मणों से निम्न प्रकार आशीर्वाद ग्रहण करे । यजमान—हमारा गोत्र उन्नत हो । ब्राह्मण—तुम्हारा गोत्र उन्नत हो । इसी प्रकार अगले

